**सृ** गतौ भ्वादि० पर० सक० अनिट् सरति । असरत् असा-र्षीत् पर्युदासान्न षोपदेशः । "नालानं करिणां ससे" च रघुप्रयोगात् आत्म० । [साच्च षोपदेशः ।

**सृ** गतौ जु० वैदिकः पर०सक०सेट् । ससर्त्ति असरत् पर्युदा-

**सृक** पु० सृ-कक् । १कैरवे २वाणे उणा० । ३पद्मे ४वायौ च सि० कौ० ।

**सृकण्डु** पु० सृ-क्विप् पृषो० कर्म० कण्डुरोगे शब्दर० ।

**सृकाल** पु० सृ-कालन् कस्य नेत्वम् । शृगाले शब्दच० ।

**सृक्क(न्)** न० सृज-कन् कनिन् वा कस्य नेत्वम् । ओष्ठप्रान्त-भागे "सृक्कणी परिलेढ़ च" स्मृतिः । "महासृक्काय शोभितो न्टसिंहवर्दिति" सृ षात् कान्ततापस्य ।

**सृक्कन्** न० सृज-कनिप् । ओष्ठप्रान्तभागे अमरः । पृषो० । सृक्किन् अप्यत्र अरुणः । सृक्कणी तत्रार्थे स्त्री राजनि०

**सृग** पु० सृ-गक् गस्य नेत्वम् । भिन्दिपालास्त्रे अमरः ।

**सृगाल** पुंस्त्री० सृ-गालन् गस्य नेत्वम् । १जम्बुके (शेयाल) शब्दर० । स्त्रियां ङीष् । २दैत्यभेदे हरिवं० ।

**सृज** विसर्गे त्यागे दिवा० आत्म० अनिट् सक० । सृज्यते असृष्ट । पर्युदासान्न षोपदेशः ।

**सृज** विसर्गे तु० पर०सक०अनिट् सृजति असाक्षीत् ससर्जिथ ससष्ठ स्रष्टा स्रक्ष्यति । पर्युदासान्न षोपदेशः ।

**सृजकाचार** पु० सृजति वर्चस्वित्वं सृज-क ततः स्वार्थे क सृजका सर्जिका कर्म० । सर्जिकाक्षारे रत्नमा० ।

**सृणि** पु० सृ-निक् । १शत्रौ शब्दमा० । २अङ्कुशास्त्रे स्त्री अमरः । तत्र वा ङीप् । सृणीत्यपि ।

**सृणि(णी)का** स्त्री सृणि+कन् ईकन् वा । लालायाम् अमरः

**सृति** स्त्री सृ-भावे क्तिन् । १गमने । करणे क्तिन् । २पथि च मेदि० । [संक्षिप्त०

**सृत्वन्** पु० सृ-क्वनिप् । १प्रजापतौ उज्ज्वल० । २विसर्पे ३बुद्धौ

**सृत्वर** त्रि० सृ-क्वरप् । १गमनकर्त्तरि स्त्रियां ङीप् । सा च २मातरि संक्षिप्तसा० ।

**सृदर** पु० सृ-अरक् दुक् च । सर्पे सि० कौ० ।

**सृदाकु** पु० सृ-काकु दुक् च । १वायौ २वज्रे ३अग्नौ ४प्रति-सूर्य्ये मेदि० । ५मृगे संक्षिप्त० । नद्यां स्त्री उणा० ।

**सृप** गतौ भ्वा० पर० सक० अनिट् । सर्पति असृपत् । पर्युदासान्न षोपदेशः ।

**सृपाट** पुंस्त्री० सृप-काटन् । १परिमाणभेदे २रत्नधारायां गोवर्द्धनः । स्त्रियां ङीप् । स्वार्थे क अत इत्त्वम् । सृ-पाटिका । चञ्चौ हेमच० ।

**सृप्र** पु० सृप-क्रन् । चन्द्रे उणा० । [२गमनशीले त्रि० ।

**सृमर** पुंस्त्री० सृ-क्मरच् । मृगभेदे अमरः । स्त्रियां ङीष् ।

**सृष्ट** त्रि० सृज-क्त । १निर्मिते २युक्ते ३निश्चिते ४बहुले मेदि० । ५भूषिते अजयः । ६त्यक्ते च ।

**सृष्टि** स्त्री सृज-क्तिन् । १निर्माणे २स्वभावे च मेदि० कर्मणि क्तिन् । ३सृज्यमाने "या सृष्टिः स्रष्टुराद्ये"ति शकुन्तला० ४निर्गुणे शब्दर० ।

ब्रह्माण्डसृष्टिप्रकारः नानापुराणेषूक्तः तत्र मत्स्यपु० उक्तः प्रकारो यथा

"महाप्रलयकालान्त एतदासीत्तमोमयम् । प्रसुप्तमिव चातर्क्यमप्रज्ञातमलक्षणम् । अविज्ञेयमविज्ञातं जगत् स्थाणु चरिष्णु च । ततः स्वयम्भूरव्यक्तः प्रभवः पुण्य-कर्मणाम् । व्यञ्जयन्नेतदखिलं प्रादुरासीत्तमोनुदः । योऽतीन्द्रियः परो व्यक्तादणुर्ज्यायान् सनातनः । नारा-यण इति ख्यातः स एकः स्वयमुद्बभौ । यः शरीरा-दभिध्याय सिसृक्षुर्विविधं जगत् । अप एव ससर्जादौ तासु वीजमवासृजत् । तदेवाण्डं समभवद्धेमरूप्यमयं महत् । संवत्सरसहस्रेण सूर्य्यायुतसमप्रभम् । प्रवि-श्यान्तर्महातेजाः स्वयमेवात्मसम्भवः । प्रभावादपि तत् व्याप्त्या विष्णुत्वमगमत् पुनः । तदन्तर्भगवानेष सूर्य्यः समभवत् पुरा । आदित्यश्चादिभूतत्वात् ब्रह्मा ब्रह्म पठन्नभूत् । दिवं भूमिं समकरोत्तदण्डशकलद्वयम् । स चाकरोद्दिशः सर्वा मध्ये व्योम च शाश्वतम् । जरा-युर्मेरुमुख्याश्च शैलास्तस्याभवंस्तदा । यदुल्वं तदभून्मेघ-स्तडिद्वज्रादिमण्डलम् । नद्योऽण्डनाम्नः सम्भूताः पितरो मनवस्तथा । सप्त येऽमी समुद्राश्च तेऽपि चान्त-र्जलोद्भवाः । लवणेक्षुसुराद्याश्च नानारत्नसमन्विताः । स सिसृक्षुरभूद्देवः प्रजापतिररिन्दम ! । तत्तेजसश्च तत्रैव मार्त्तण्डः समजायत । मृतेऽण्डे जायते यस्मा-न्मार्त्तण्डस्तेन स स्मृतः । रजोगुणमयं यत्तद्रूपं तस्य महात्मनः । चतुर्मुखः स भगवानभूल्लोकपितामहः । येन सृष्टं जगत्सर्वं स देवासुरमानुषम् । तमवेहि रजोरूपं महत्सत्त्वमुदाहृतम्" । मनुरुवाच "चतुर्मुख-त्वमगमत् कस्माल्लोकपितामहः । कथं तु लोकान् सृ-जत् ब्रह्मा ब्रह्मविदांवरः" । मत्स्य उवाच "तपश्चचार प्रथममभराणां पितामहः । आविर्भूतास्ततो वेदाः साङ्गोपाङ्गपदक्रमाः । पुराणं सर्वशास्त्राणां प्रथमं ब्र-ह्मणा स्मृतम् । नित्यं शब्दमयं पुण्यं शतकोटिवि-

त्तरम् । अनन्तरञ्च वक्त्रेभ्यो वेदास्तस्य विनिःसृताः । मीमांसा न्यायविद्याश्च प्रमाणाष्टकसंयुताः । वेदाभ्यासरतस्यास्य प्रजाकामस्य मानसाः । मनसा पूर्वसृष्टा वै जाता यत्तेन मानसाः । मरीचिरभवत् पूर्वं ततोऽत्रिर्भगवान् ऋषिः । अङ्गिराश्चाभवत्तस्मात् पुलस्त्यस्तदनन्तरम् । ततः पुलहनामा वै ततः क्रतुरजायत । प्रचेताश्च ततः पुत्रो वशिष्ठश्चाभवत् पुनः । पुत्रो भृगुरभूत्तद्वन्नारदोऽप्यचिरादभूत् । दशेमान् मानसान् ब्रह्मा मुनीन् पुत्रानजीजनत् । शारीरानथ वक्ष्यामि मातृहीनान् प्रजापतेः । अङ्गुष्ठाद्दक्षिणाद्दक्षः प्रजापतिरजायत । धर्म्मः स्तनान्तादभवत् हृदयात् कुसुमायुधः । भ्रूमध्यादभवत् क्रोधो लोभश्चाधरसम्भवः । बुद्धेर्मोहः समभवदहङ्कारादभून्मदः । प्रमोदश्चाभवत् कण्ठान् मृत्युर्लोचनतो नृप ! । भरतः करमध्यात्तु ब्रह्मसूनुरभूत्ततः । एते नव ! सुता राजन् ! कन्या च दशमी पुनः । अङ्कजा इति विख्याता दशमी ब्रह्मणः सुता । मनुरुवाच "बुद्धेर्मोहः समभवदिति यत् परिकीर्त्तितम् । अहङ्कारः स्मृतः क्रोधो बुद्धिर्नाम किमुच्यते" । मत्स्य उवाच "सत्त्वं रजस्तमश्चैव गुणत्रयमुदाहृतम् । साम्यावस्थितिरेतेषां प्रकृतिः परिकीर्त्तिता । केचित् प्रधानमित्याहुरव्यक्तमपरे जगुः । एतदेव प्रजासृष्टिं करोति विकरोति च । गुणेभ्यः क्षोभमाणेभ्यस्त्रयो देवा विजज्ञिरे । एका मूर्त्तिस्त्रयो भागा ब्रह्मविष्णुमहेश्वराः । सविकारात् प्रधानात्तु महत्तत्त्वं प्रजायते । महानिति यतः ख्यातिर्लोकानां जायते सदा । अहङ्कारश्च महतो जायते मानवर्द्धनः । इन्द्रियाणि ततः पञ्च वक्ष्ये बुद्धिवशानि तु । प्रादुर्भवन्ति चान्यानि तथा कर्म्मवशानि तु । श्रोत्रं त्वक्चक्षुषी जिह्वा नासिका च यथाक्रमम् । पायूपस्थं हस्तपादं वाक् चेतीन्द्रियसंग्रहः । शब्दः स्पर्शश्च रूपञ्च रसो गन्धश्च पञ्चमः । उत्सर्गानन्दनादानगत्यालापाश्च तत्क्रियाः । मन एकादशं तेषां कर्म्मबुद्धिगुणान्वितम् । इन्द्रियावयवाः सूक्ष्मास्तस्य मूर्त्तिं मनीषिणः । श्रयन्ति यस्मात्तन्मात्राः शरीरं तेन संस्मृतम् । शरीरयोगाज्जीवोऽपि शरीरी गद्यते बुधैः । मनः सृष्टिं विकुरुते चोद्यमानं सिसृक्षया । आकाशं शब्दतन्मात्रादभूच्छब्दगुणात्मकम् । आकाशविकृतेर्वायुः शब्दस्पर्शगुणोऽभवत् । वायोश्च स्पर्शतन्मात्रात्तेजश्चाविरभूत्ततः । त्रिगुणं तद्विकारेण तच्छब्दस्पर्शरूपवत् । तेजो विकाराद्भवद्वारि राजंश्चतुर्गुणम् । रसतन्मात्रसम्भूतं प्रायो रसगुणात्मकम् । भूमिस्तु गन्धतन्मात्रादभूत् पञ्चगुणान्विता । प्रायो गन्धगुणा सा तु बुद्धिरेषा गरीयसी । एभिः सम्पादितं भुङ्क्ते पुरुषः पञ्चविंशकः । ईश्वरेच्छावशः सोऽपि जीवात्मा कथ्यते बुधैः । एवं षड्विंशकं प्रोक्तं शरीर इह मानवे । सांख्यं संख्यात्मकत्वाच्च कपिलादिभिरुच्यते । एतत्तत्त्वात्मकं कृत्वा जगद्वेधा अजीजनत् । सावित्रीं लोकसृष्ट्यर्थं हृदि कृत्वा समास्थितः । ततः संजपतस्तस्य भित्त्वा देहमकल्मषम् । स्त्रीरूपमर्द्धमकरोदर्द्धं पुरुषरूपवत् । शतरूपा च सा ख्याता सावित्री च निगद्यते । सरस्वत्यथ गायत्री ब्रह्माणी च परन्तप ! । ततः स्वदेहसम्भूतामात्मजामित्यकल्पयत् । दृष्ट्वा तां व्यथितस्तावत्कामबाणार्द्दितो विभुः । अहो रूपमहो रूपमिति चाह प्रजापतिः । ततो वशिष्ठप्रमुखाः भगिनीमिति चुक्रुशुः । ब्रह्मा न किञ्चिद्ददृशे तन्मुखालोकनादृते । अहो रूपमहो रूपमिति प्राह पुनः पुनः । ततः प्रणामनम्रान्तां पुनरेवाभ्यलोकयत् । अथ प्रदक्षिणं चक्रे सा पितुर्वरवर्णिनी । पुत्रेभ्यो लज्जितस्यास्य तद्रूपालोकनेच्छया । आविर्भूतं ततो वक्त्रं दक्षिणं पाण्डुगण्डवत् । विस्मयस्फुरदोष्ठञ्च पाश्चात्यमुदगात्ततः । चतुर्थमभवत् पश्चाद्वामं कामशरातुरम् । ततोऽन्यदभवत्तस्य कामातुरतया तथा । उत्पतन्त्यास्तदाकाश आलोकनकुतूहलात् । सृष्ट्यर्थं यत् कृतं तेन तपः परमदारुणम् । तत् सर्वं नाशमगमत् स्वसुतोपगमेच्छया । तेनोर्द्ध्वं वक्त्रमभवत् पञ्चमं तस्य धीमतः । आविर्भवज्जटाभिश्च तद्वक्त्रञ्चावृणोत् प्रभुः । ततस्तानब्रवीत् ब्रह्मा पुत्रानात्मसमुद्भवान् । प्रजाः सृजध्वमभितः सदेवासुरमानुषीः । एवमुक्तास्ततः सर्वे ससृजुर्विविधाः प्रजाः । गतेषु तेषु सृष्ट्यर्थं प्रणामावनतामिमाम् । उपयेमे स विश्वात्मा शतरूपामनिन्दिताम् । सम्बभूव तया सार्द्धमतिकामातुरो विभुः । सलज्जाञ्चकमे देवः कमलोदरमन्दिरे । यावदब्दशतं दिव्यं यथान्यः प्राकृतो जनः । ततः कालेन महता तस्याः पुत्रोऽभवन्मनुः । स्वायम्भुव इति ख्यातः स विराडिति नः श्रुतम् । स तु तद्रूपसामान्यादधिपूरुष उच्यते । वैराजा यत्र ते जाता बहवः शंसितव्रताः । स्वायम्भुवा महाभागाः सप्त सप्त तथा परे । स्वारोचिषाद्याः सर्वे ते ब्रह्मतुल्यस्वरूपिणः । औत्तमिप्रमुखा-

"कृतदुर्येषान्त्वं सम्प्रमोऽधुना" । सर्गशब्दे ५२५० पृ० तत्स्थानववियत्वं दृश्यम् । [गर्भदात्रीक्षुपे राजनि० ।

**सृष्टिप्रदा** स्त्री सृष्टिं तज्जेतुं गर्भं प्रददाति प्र+दा–क ।

**सृ(सॄ)** हिंसायां क्र्या० प० प० सक० सेट् । सृणाति असारीत् सीर्णः सीर्णिः । धोपदेश एव न्याय्यः ।

**सेक** गतौ भ्वा० आ० सक० सेट् । सेकते असेकिष्ट पर्युदासाच्च षोपदेशः । क्वादित् चङि न ह्रस्वः ।

**सेक** पु० सिच–घञ् । सेचने जलादिना आर्द्रीकरणे हेमच० ।

**सेकपात्र** न० सिच्यतेऽनेन सिच–करणे घञ् कर्म० । (सेउनी) सेचनपात्रभेदे अमरः ।

**सेकिम** न० सेकेन निर्वृत्तम् सेक–वा डिम । मूलके हेमच०

**सेक्तृ** पु० सिञ्चति रेतः सिच–तृच् । १पत्यौ हेमच० । २सेचके त्रि० स्त्रियां ङीप् ।

**सेक्त्र** न० सिच–करणे ष्ट्रन् । सेकपात्रे सि० कौ० ।

**सेचक** पु० सिञ्चति तोयेन पृथिवीम् सिच–ण्वुल् । १मेघे २सेककर्त्तरि त्रि० मेदि० ।

**सेचन** न० सिच–भावे ल्युट् । १जलादिना आर्द्रीकरणे २क्षरणे । करणे ल्युट् । ३सेचन्यां क्षुद्रसेकपात्र्यां स्त्री ङीप् मेदि० ।

**सेटु** पु० सिट–उन् । (तरमुज) इत्ये त्रिका० ।

**सेतु** पु० सि–तुन् । १क्षेत्रादेर्जलधारणार्थे (आल) (जाङ्गाल) पदार्थे अमरः । २वरुणवृक्षे मेदि० । मन्त्रजपाङ्गे ३प्रणवात्मके मन्त्रे च स्वार्थे क । सेतुक वरुणवृक्षे शब्दर० । "सेतुप्रदानादिन्द्रस्य लोकमाप्नोति मानवः" मठादि० त० । सेतुभेदश्च । सीमाविवादशब्दे ५३०० पृ० उक्तः । "सेतुश्च द्विविधः प्रोक्तः खेयो बन्ध्यस्तथाऽपरः । तोयप्रवर्त्तनात् खेयो बन्ध्यस्तु तन्निवर्त्तनात्" नारदः । मन्त्रजपाङ्गसेतुश्च कालिकापु० ५५अ० उक्तो यथा "मन्त्राणां प्रणवः सेतुस्तत्सेतुः प्रणवः स्मृतः । स्रवत्यनोङ्कृतं पूर्वं परस्ताच्च विशीर्यति । नमस्कारो महामन्त्रो देव इत्युच्यते सुरैः । द्विजातीनामयं मन्त्रः शूद्राणां सर्वकर्मणि । अकारश्चाप्युकारश्च मकारश्च प्रजापतिः । वेदत्रयात् समुद्धृत्य प्रणवं निर्ममे पुरा । स उदात्तो द्विजातीनां राज्ञां स्यादनुदात्तकः । स्वरितश्चोरुजातानां सप्तमापि तथा स्वरेत् । चतुर्दशस्वरो योऽसौ सेतुरौकारसंज्ञकः । स चानुस्वारचन्द्राभ्यां शूद्राणां सेतुरुच्यते । निःसेतुकं यथा तोयं क्षणान्निम्नं प्रसर्पति । मन्त्रस्तथैव निःसेतुः क्षणात् क्षरति यज्वनाम् । तस्मात् सर्वेषु मन्त्रेषु चतुर्वर्णा द्विजादयः । पार्श्वयोः सेतुमाधाय जपकर्म समारभेत् । शूद्राणामादिसेतुर्वा द्विसेतुर्वा यथेच्छतः । द्विसेतवः समाख्याता सर्वदैव द्विजातयः" ।

**सेतुबन्ध** पु० ६त० । लङ्कागमनार्थं श्रीरामेण नलकपिद्वारा कारिते समुद्रोपरि १आलीबन्धे २क्षेत्रादेरालीबन्धे च । "ततोऽब्रवीद्रघुश्रेष्ठं सागरो विनयान्वितः । नलः सेतुं करोत्वस्मिन् जले मे विश्वकर्मणः । सुतो धीमान् समर्थोऽस्मिन् कार्य्ये लब्धवरो हरिः । कीर्त्तिं गायन्तु ते लोकाः सर्वलोकमलापहाम् । इत्युक्त्वा राघवं नत्वा ययौ सिन्धुरदृश्यताम् । ततो रामस्तु सुग्रीवलक्ष्मणाभ्यां समन्वितः । नलमाज्ञापयच्छीघ्रं वानरैः सेतुबन्धनात् । ततोऽतिहृष्टः प्लवगेन्द्रयूथपैर्महानगेन्द्रप्रतिमैर्युतो नलः । बबन्ध सेतुं शतयोजनायतं सुविस्तरं पर्वतपादपैर्दृढम्" अध्यात्मरा० ३ अ० । "सेतुमारभमाणस्तु तत्र रामेश्वरं शिवम् । सङ्कल्पनियतो गत्वा पुरीं वाराणसीं नरः । आनीय गङ्गासलिलं रामेशमभिषिच्य च । क्षिप्त्वा समुद्रे तद्वारि ब्रह्म प्राप्नोत्यसंशयः । कृतानि प्रथमेनाह्ना योजनानि चतुर्दश । द्वितीयेन तथा चाह्ना योजनानाञ्च विंशतिः । तृतीयेन तथा चाह्ना योजनान्येकविंशतिः । चतुर्थेन तथा चाह्ना द्वाविंशतिः तथा कृतम् । पञ्चमेन त्रयोविंशद् योजनानां समन्ततः । बबन्ध सागरे सेतुं नलो वानरसत्तमः । तेनैव जग्मुः कपयो योजनानां शतं द्रुतम् । असंख्याताः सुवेलाद्रिं रुरुधुः प्लवगोत्तमाः" ४अ० ।

**सेतुभेदिन्** पु० सेतुं भिनत्ति भिद–णिनि । दन्तीवृक्षे शब्दर० ।

**सेतुवृक्ष** पु० सेतुनामको वृक्षः । वरुणवृक्षे शब्दर० । २सेतूपरिस्थे वृक्षे च ।

**सेत्र** न० सि–बन्धने ष्ट्रन् । (वेड़ि) निगड़े सि० कौ० ।

**सेना** स्त्री सि–न, सह इनेन प्रभुणा वा । १सैन्ये अमरः । २जिनानां ३मातृभेदे हेमच० । [२सेनाया उपकरणे च ।

**सेनाङ्ग** न० ६त० । १हस्त्यश्वरथपदातिसंघाते अमरः ।

**सेनाचर** पु० सेनायां चरति चर–ट । सेनानुगामिनि "सेनाचरीभवदिभाननेति" नैष० । [केये २सेनापतौ च अमरः

**सेनानी** पु० सेनां देवसेनां वा नयति नी–क्विप् । १कार्त्ति-

**सेनापति** पु० ६त० । १कार्त्तिकेये २सैन्याध्यक्षे च मेदि० । "कुलीनः शीलसम्पन्नो धनुर्वेदविशारदः । हस्तिशिक्षाश्वशिक्षासु कुशलः श्लक्ष्णभाषिता । निमित्ते शकुने ज्ञाता वेत्ता चैव चिकित्सिते । कृतज्ञः कर्मणां शूरस्तथा

क्लेशसह ऋजुः। व्यूहतत्त्वविधानज्ञः फल्गुसार-विशेषवित्। राज्ञा सेनापतिः कार्यो ब्राह्मणः क्षत्रियोऽथ वा" मत्स्यपु० १८९ अ०।

**सेनामुख** न० ६त०। १सैन्याग्रे संख्याविशेषयुते हस्त्यश्वादौ हस्तिनः त्रयः रथाः त्रयः अश्वा नव पत्तादयः पञ्चदश एतत्समुदाये अमरः। [२मिके सैन्ये अमरः।

**सेनारक्ष** पु० सेनां रक्षति रक्ष–अण्। सेनारक्षाकारके या-

**सेफ** पु० सि–फ। शेफे पुंसोऽसाधारणचिह्ने जटा०।

**सेमन्ती** स्त्री सिम–क्षि गौ० ङीष्। (सेयाँती) पुष्पभेदे।

**सेर** पु० "पादोनगद्यानकतुल्यटङ्कैर्द्विसप्त७२तुल्यैः कथितोऽत्र सेरः। मणाभिधानं खयुगैः४०श्च सेरैर्धान्यादितौल्येषु तुरुष्कसंज्ञः १। १द्रङ्केन्दु १८२। सङ्क्षैर्धटकैश्च सेरस्तैः पञ्चभिः स्याद्धटिका च ताभिः। मणोऽष्टभिस्त्वालमगीरशाहकृतात्र संज्ञा निजराजधान्याम्" लीला० उक्ते मानभेदे।

**सेराह** पुंस्त्री०। श्वेताश्वे हेमच० स्त्रियां ङीष्।

**सेरु** त्रि० सि–बन्धने रु। बन्धनकर्त्तरि व्या०।

**सेलु** पु० सि–लु। श्लेष्मातकवृक्षे द्विरूपको०।

**सेव** न० सेव–कर्मणि घञर्थे क। सेविफले (सेओ) राजनि०

**सेवक** पु० सीव्यति सिव–ण्वुल्। १सीवनकर्त्तरि (दरजी) सेव–ण्वुल्। २भृत्ये ३दासे ४अनुचरे च त्रि० मेदि०।

**सेवकालु** पु० सेवं सेविफलमिव कायति कै–क कर्म०। निशाभङ्गावृक्षे (दुग्धपेया) शब्दच०। [निधौ भरतः।

**सेवधि** पु० सेवं सेवनं दधाति धा–कि। शङ्खप्रभृतौ

**सेवन** न० सिव–सेव–वा ल्युट्। १सूच्यादिना वस्त्रादेर्योजने अमरः। २आश्रयणे ३उपभोगे ४बन्धने ५पूजने ६भजने च मेदि०। सीव्यतेऽनया ल्युट्। ७सूच्यां स्त्री ङीप् हेमच०।

**सेवा** स्त्री सेव–अ। १भजने २आराधने ३उपभोगे ४आश्रयणे च। सेवापराधाश्च अपराधशब्दे २२२पृ० दर्शिताः वाराहेत्वन्यथोक्ता यथा "कर्मणा मनसा वाचा ये पापकर्मिणो जनाः। भक्षणं दन्तकाष्ठस्य राजान्नस्य तु भोजनम्। मैथुनं शवसंस्पर्शः पुरीषोत्सर्ग एव च। सूतक्युदक्यास्पर्शनं स्पर्शनं मोहनं तथा। अभाष्यभाषणं कोपं पिण्याकस्य च भक्षणम्। रक्तपारक्यमलिननीलजालम्बरधारणम्। गुरोश्चालीकनिर्बन्धः पतितान्नस्य भक्षणम्। अभक्ष्यभक्षणञ्चैव तण्डुलीयविभीतकम्। खाद्दानं तु वराहस्य जालपादवराकयोः। भक्षणं देवतागारे सोपानत्कोपसर्पणम्। तथैव देवपूजायां निषिद्धकुसुमार्चनम्। अनुत्तार्य्य च निर्माल्यं पूजा जीर्णान्धकारयोः। पानं सुराया देवस्य अन्धकारे प्रबोधनम्। वातकर्मार्चने विष्णोरनमस्करणं तथा। अपराधास्त्रयस्त्रिंशत् समाख्याता मया धरे!। एभिर्युक्तस्तु पुरुषो विष्णुं नैव प्रपद्यति। दूरस्थो न नमस्कारं कुर्य्यात् पूजा तु राक्षसी"।

**सेवि** न० सेव–कर्मणि इन्। फलभेदे (सेओ) राजनि०।

**सेविका** स्त्री पक्वान्नभेदे कृतान्नशब्दे २१२१ पृ० दृश्यम्।

**सेवित** त्रि० सेव–क्त। १आराधिते शब्दर०। २आश्रिते ३उपयुक्ते च ५सेविफले न० राजनि०।

**सेव्य** न० सेव–ण्यत्। १वीरणमूले अमरः। २अश्वत्थे पु० राजनि०। ३हिज्जलवृक्षे पु० शब्दर०। ४सेवार्हे त्रि०। ५वन्दाकृक्षे स्त्री हेमच०। [राजनि०।

**सैंहली** स्त्री सिंहले देशे भवा अण् ङीप्। सिंहपिप्पल्याम्

**सैंहिक** पु० सिंहिकायां भवः ठक्। १राहौ शब्दर०। तस्याः अपत्यम् ढक्। सैंहिकेयोऽप्यत्र अमरः।

**सैकत** न० सिकताः सन्त्यत्र अण्। बालुकाप्रचुरे नद्यादितटे अमरः। २सिकताप्रचुरदेशे त्रि० राजनि०।

**सैकतिक** पु० सह एकतया सैकतं तदस्यास्ति ठन्। १संन्यस्ते २क्षपणके ३सन्देहजीविनि त्रि० मेदि०। ४मातृयात्रायां ५मङ्गलसूत्रके न० मेदि०। [२सैकतप्रिये त्रि०।

**सैकतेष्ट** न० सैकतं स्थानमिष्टं यस्य। १आर्द्रके राजनि०।

**सैतवाहिनी** स्त्री सितायाः शर्करायाः अयम् अण् सैतो मधुररसस्तं वहति वह–णिनि। बाहुदायां नद्याम् अमरः।

**सैद्धान्तिक** पु० सिद्धान्तं वेत्ति सिद्धान्त+ठक्। सिद्धान्ताभिज्ञे हेमच०। [२तत्कर्मणि च "सैनापत्यमुपेत्य यः" कुमारः।

**सैनापत्य** न० सेनापतेर्भावः कर्म वा ष्यञ्। १सेनापतिधर्म,

**सैनिक** पु० सेनायां समवैति ठक्। १मिलिते हस्त्यश्वादौ अमरः। प्राणिवधनियुक्ते भाग०५।६६अ० ति०त०रघु०। वस्तुतस्तु सौनिका इव श्वधितिनेत्येव तत्र पाठः साधुः ३सेनासम्बन्धिनि त्रि०।

**सैन्धव** न० सिन्धुनदीसमीपे देशे भवम् अण्। १लवणभेदे अमरः "सैन्धवं लवणं स्वादु दीपनं पाचनं लघु। स्निग्धं रुच्यं हिमं वृष्यं सूक्ष्मं नेत्र्यं त्रिदोषहृत्" भावप्र०। सिन्धोरदूरभवः अण्। २घोटकभेदे पुंस्त्री० अमरः तस्य समुद्रसमीपस्थसिन्धुदेशस्यारब्यदेशाद्भवत्वात् तथात्वम्। स्त्रियां ङीष्।

**सैन्धवखिल** न० सैन्धवमेव खिलम्। सैन्धवशिलाशकलसमे चिदानन्दस्वरूपे परमेश्वरे "स यथा सैन्धवखिलमनन्तरमवाह्यं रसघनम्" शत०ब्रा०१४।७।३।१२।

**सैन्धी** स्त्री तालादिनिर्यासे राजनि०।

**सैन्य** पु० सेनायां समवैति ञ्य। १मिलिते हस्त्यश्वादौ अमरः। सेनानां सङ्घः ष्यञ्। २सेनासमुदाये न०।

**सैरन्ध्री** स्त्री सीरं हलं धरति धृ-मूल० क सुम् च सीरन्ध्रः कृषकस्तस्येदं शिल्पकर्म अण् तदस्यास्ति अच् गौरा० ङीष्। परगृहस्थे स्ववशे शिल्पकारिण्यां स्त्रीभेदे हेमच० पृषो० सैरिन्ध्रीत्यप्यत्र अमरः।

**सैरिक** पु० सीरेण लाङ्गलेन खनति भूमिं सीरं वहति वा ठक्। १कृषके हालिके अमरः। २लाङ्गलयोढरि वृषे (हालेर गरु) अमरः।

**सैरिभ** पुंस्त्री० सीरे हले तद्वहने इभ इव शूरत्वात् शाक० ततः स्वार्थे अण्। १महिषे अमरः स्त्रियां ङीप्। "सेवे सैरिभमर्दिनीमिह महालक्ष्मीम्" महालक्ष्मीध्यानम्। २स्वर्गे त्रिका०। [भिक्टराम् शब्दर०। स्वार्थे क तत्रैव।

**सैरीय** पु० सीरस्येदम् अण् सैरं हलाकारमर्हति छ।

**सैरेय** पु० सैरं सीराकारमर्हति ढक्। १भिक्टराम् शब्दर० ढकञ्। सैरेयकोऽप्यत्र राजनि०।

**सैवाल** न० सेवायै मीनादीनामुपभोगाय अलति पर्याप्नोति अच् सेवालं ततः स्वार्थे अण्। शैवाले स्वार्थे क। तत्रैव "या पांशुपाण्डुरवपुर्विरसा पुरासीत् सैवालकाङ्कुरवतामधुना बिभर्ति चङ्कटपदो ञ्श्लोकात् इत्यादि

**सोढ़** त्रि० सह-क्त इडभावः। १चान्ते तितिक्षिते अमरः कर्त्तरि क्त। २शीतादिद्वन्द्वसहनशीले त्रि०। [शीले मेदि०।

**सोढ़** त्रि० सह-तृच् वा इडभावः। १सहनकर्त्तरि २क्षमा-

**सोत्कण्ठ** त्रि० सह उत्कण्ठया सहस्य सः। औत्सुक्यान्विते अभीष्टलाभेच्छया विलम्बासहिष्णुत्वयुक्ते जटा०।

**सोत्प्रास** न० उद्+प्र-अस-घञ् सह उत्प्रासेन सहस्य सः सोल्लुण्ठने अन्यार्थकस्य वाक्यस्य अन्यार्थकत्वकल्पनया तदुत्तरार्थके १वाक्ये २प्रियवाक्ये च शब्दर०। ३सशब्दहासेन सहिते त्रि०।

**सोदय** त्रि० सह उदयेन प्रादुर्भावेण वृद्ध्या वा सहस्य सः १प्रादुर्भूते २वृद्धि(सूद)युक्ते ३लाभयुक्ते च "व्ययं दद्याच्च सोदयम्" स्मृतिः। [भ्रातरि २तादृशभगिन्यां स्त्री शब्दर०

**सोदर** पु० समानमुदरं यस्य समानस्य सः। १एकोदरभवे

**सोदर्य्य** पु० समाने उदरे शयितः यत् सादेशः। १एको-

दरजाते भ्रातरि। २तादृशभगिन्यां स्त्री अमरः।

**सोनह** न० सु-विच् सवे नह्यते नह घञर्थे क। लशुने शब्दर०

**सोन्माद** पु० सह उन्मादेन सादेशः। उन्मत्ते उन्मादिष्णौ।

**सोपप्लव** पु० सह उपप्लवेन सादेशः। समाक्रान्तभूच्छायेन राहुणा योगरूपोपप्लवसहिते १चन्द्रे तथाभूतचन्द्रच्छायायोगयुक्ते २सूर्य्ये च अमरः। ३उपद्रवयुते त्रि०। चन्द्रार्कयोर्ग्रासकारणमुपरागशब्दे प्रायेणोक्तं देवीपुराणोक्तमधिकमत्रोच्यते।

"ब्रह्मोवाच "यदयं वदते लोको वालिशत्वान्महामते!। तदहं संप्रवक्ष्यामि चन्द्रसूर्योपरागिकम्। यदि सत्यमयं ग्रस्तस्तोरारार्दिवाकरः। तत्कथं नोदरस्थेन राहुणा भस्मसात् कृतः। अथ वा राहुणाक्रम्य निजवक्त्रं प्रवेशितः। तत्कथं दशनैस्तीक्ष्णैः शतधा न विखण्डितः। विमुक्तश्च पुनर्दृष्टस्तथैवाखण्डमण्डलः। न चास्यापहृतं तेजो न स्थानादपसारितः। यदि वा ह्येष निष्पीतः कथं दीप्ततरोऽभवत्। तस्मात्तु तेजसां राशी राहोर्वक्त्रं गमिष्यति। भक्ष्यार्थं सर्वदेवानां सोमः सृष्टः स्वयम्भुवा। तत्रस्थममृतञ्चापि सम्भूतं सूर्य्यतेजसा। पिबन्त्यमृतमयं देवाः पितरश्च स्वधाऽमृतम्। त्रयश्च त्रिशतश्चैव त्रयस्त्रिंशत्तथैव च। त्रयश्च त्रिसहस्राश्च देवाः सोमं पिबन्ति ये। राहोरप्यमृतं भागः पुरा सृष्टः स्वयम्भुवा। तस्मात्सह्यामुरागत्य पातुमिच्छति पर्वसु। उद्धृत्य पार्थिवीं छायामभ्राकारां तमोमयः। पातुमिच्छन् ततस्तेन्दुमाच्छादयति छायया। शुक्ले च चन्द्रमभ्येति कृष्णे पर्वणि भास्करम्। सूर्य्यमण्डलसंस्थस्तु चन्द्रमेव जिघांसति। तस्मात् पिबति तं राहुस्तत्तनुत्या विनाशयन्। अविच्छिन्नन् यथा पद्मं पिबति भ्रमरो मधु। चन्द्रस्थममृतं तद्वद्भेदाद्राहुरश्नुते। चन्द्रकान्तो मणिर्यद्वत्तु छिन्नं क्षरते जलात्। क्षरन्नपि न हीयेत तेजसा नैव मुच्यते। यथा सूर्य्यमणिः सूर्य्यादुत्पाद्य पावकं शुभम्। न भवत्यप्यहीनोऽपि तेजसा नैव मुच्यते। एवं चन्द्रश्च सूर्य्यश्च छादितावपि राहुणा। स्वतेजसा न मुच्येते नाप्यहीनौ बभूवतुः। पर्वस्वथ च चन्द्रस्य माणिक्यकनकाकृतिः। सोमो दैवतसंयोगात् छाया योगाच्च पार्थिवात्। राहोश्च वरलब्धा वै प्रक्षरेदमृतं शशी। स्वदोहकाले सम्प्राप्ते वत्सं दृष्ट्वा च सौरभेया। स्वाङ्गादेव क्षरेत् क्षीरं तथेन्दुः क्षरतेऽमृतम्। पितेव सूर्य्यो देवानां सोमो मातेव लक्ष्यते। यथा मातुःस्तनं

पीत्वा जीवन्ति सर्वजन्तवः। पीत्वाऽमृतं तथा सोमात् तृप्यन्ते सर्वदेवताः। सम्भृतं सर्वयागेषु तथाय क्षरते शशी। तं क्षरन्तं यथाभागमुपजीवन्ति देवताः। तस्मिन् काले समभ्येति राहुरप्यवकर्षति। सर्वमर्द्धं त्रिभागञ्च पादं पादार्द्धमेव च। आक्रम्य पार्थिवीं छायां यावन्त चन्द्रमण्डलम्। अतः स भागो राहोस्तु देवभागास्तु शेषकाः। तांश्च विधाय देवानां राहोः पर्वगतस्य च। चन्द्रो न क्षयमायाति तेजसा नैव मुच्यते। तिथिभागाश्च यावन्तः पुनस्त्यर्क्कं प्रमाणतः। पर्वच्छायास्थितः कालस्तावानेव प्रकीर्त्तितः। अतो राहुभुजः सोमः सोमवृद्धिर्दिवाकरात्। पर्वकाले स्थितिस्त्वेवं विपरीता पुनः पुनः। अतश्छादयते राहुरभ्रवच्छशिभास्करौ। राहुरप्यकसंस्थानः सोममाच्छाद्य तिष्ठति। उद्धृत्य पार्थिवीं छायां धूममेघ इवोत्थितः। चन्द्रस्य यद्वपुश्च्छं राहुणा भास्करस्य च। तन्मात्रखण्डेन तस्य केवलं श्यामलीकृतम्। कर्दमेन यथा वस्त्रं शुक्लमप्युपहन्यते। एकदेशोऽथ सर्वं वा राहुणा चन्द्रमास्तथा। प्रक्षालितं तदेवेह पुनः शुक्लतरं भवेत्। राहुत्यक्तं भवेत्तद्वत् निर्म्मलं चन्द्रमण्डलम्। राहुणा च्छादितौ वापि दृष्ट्वा चन्द्रदिवाकरौ। विप्राः शान्तिपरा भूत्वा पुनराप्याययन्ति तम्। एवं न गृह्यते सूर्य्यश्चन्द्रमास्तत्र गृह्यते। अबुधास्तं न पश्यन्ति मानुषा मांसचक्षुषः। जगतस्सम्मोहनञ्चैतत् ग्रहणं चन्द्रसूर्य्ययोः”।

**सोपाधि(क)** सह उपाधिना वा कप् सादेशः। उपाधियुक्ते प्रतिलाभाशया क्रतदानादौ।

**सोपान** न० उप–अन–भावे घञ् सह विद्यमानः उपानः उपरि गतिरनेन। आरोहणसाधने काष्ठादिनिर्म्मि (पैठा) प्रकृतौ पदार्थे अमरः।

**सोभाञ्जन** पु० शोभाञ्जन+पृषो०। (शजना) वृक्षे भरतः।

**सोम** पु० सु–मन्। १चन्द्रे २कर्पूरे अमरः। ३कुबेरे ४यमे ५वायौ ६वसुभेदे ७जले ८सोमलतौषधौ ९वानरे मेदि० १०सोमरसे हेमच० ११अमृते १२दीधितौ उणा०। सह उ(ज)मया। १३शिवे १४वानरेशे सुग्रीवे च।

सोमस्य ग्रहभेदः तत्कक्षामानादिकं खगोलशब्दे ४२२५ पृ० दृश्यम्। तत्प्रकृत्यादिकं यथा

“चन्द्रः सिताङ्गस्समगात्रयष्टिर्वाग्मी परिध्यङ्गविवेकयुक्तः। क्वचित् कृशः शीतलवाक्ययुक्तः सत्त्वाश्रयो वातकफानिलात्मा” सर्वार्थचिं०। स च वायव्या दैशः वैश्यजातिः स्त्रीग्रहः लवणरसस्ट्गशिरो नक्षत्राणाधीशः। ग्रहयज्ञशब्दे तन्मन्त्रादिकं दृश्यम्। तस्य जन्मकाले मेषादिराशिषु स्थितिभेदे फलभेदः वृहज्जातकोक्तः ३०८७ पृ० जातकशब्दे उक्तः। लग्नादिस्थस्य तस्य फलं जातकपद्धतावुक्तं यथा

“चन्द्रे स्वभाजवृषगे तनुगे गुणाढ्यो दाक्षिण्यरूपधनवाक्सकले विशेषात्। अन्येषु भेषु तनुगे विकलश्च शूरः प्रोन्मत्तनीचबधिरः क्षयभाग्यवश्यः। कुटुम्ब२स्थिते कैरवाणामधीशे भवेत् पुत्रमित्रार्थसौख्यैः समृद्धः। नरः पूर्णदेहे तु हीने विलोमं स्खलद्वाक् च बोध्यं फलं तारतम्यात्। द्विजाधिराजे सहजे३ऽतिलोभः कार्पण्यवान् संप्रहृष्टश्च नीचः। हर्षान्वितो भ्रातृजनाश्रयश्च प्रकाङ्क्षितः स्यात् मनुजोऽतिहिंस्रः। पाताल४संस्थे सति शीतलांशौ जलप्रयाणाभिरतिर्नरः स्यात्। दाता सुहृद्वाहनसेवकाढ्यः सुखी सुखोत्कर्षयुतः सुभूषः। सुते५ समुद्रस्य सुते प्रसूतौ धीमित्रपुत्रैर्बहुभिः समेतः। शूरो नरः स्याद्बहुधान्यमित्रसम्पद्वाहकः क्षीणतरः सुखाढ्यः। शत्रौ६ शत्रौ पद्मिनीनां स्थिते ना शत्रुव्रातैः संयुतो दारुणश्च। मारग्निश्यामलत्वकाभ्याञ्च युक्तोऽनल्पालस्यः स्याच्च नीरोदराढ्यः। शशिनि शशिमुखी-निकेतन७स्थे भवति सुखी मदनातुरः सुदेहः। अतिमतिरनसूयकोऽप्यहृष्यो मलिततनौ बहुरोगदैन्यतप्तः। मृत्यौ८स्मृगाङ्के मतिमान्नरः स्यात्तेजस्विताढ्योऽपि च बन्धनाद्यैः। सुक्षीणदेहः सति हीनदेहे तस्मिन् भवेदल्पकजीवितश्च। निशाधिनाथे नवमालय९स्थे धीपुत्रमित्रद्रविणोपपन्नः। सौभाग्यसौख्यैः सुकृतैर्युतः स्यात् कान्ताजनेष्टो मनुजो दयावान्। दशम१०धाम्नि सुशीतलधाम्नि द्रविणधीसुकृतैः सहितः शुचिः। भवति कर्म्मपरोऽपि च सिद्धिभाङ्नरवरो न विषादकरो भवेत्। आयं११याते यामिनीनायके ना मित्रक्षेत्रद्रव्यपुत्रायुक्तः। ख्यातः शूरो दारुणस्याभिमानी शिष्टैर्भृत्यैरन्वितो बुद्धिमान् स्यात्। शीतांशौ द्वादशे१२द्वेष्यो हीनाङ्गे नेत्ररोगवान्। पतितः परमः क्षुद्रः परिभूतो नरो भवेत्”।

सोमलता च ओषधिभेदः सोमवल्लीरूपा ओषधिशब्दे १५६४ पृ० सुश्रुतवाक्ये तल्लक्षणादि दृश्यम्। सोमेन यजेतेत्यादि श्रुत्युक्ते १५यागभेदे पु०। सोमयागेतिकर्त्तव्यतादि कात्या०श्रौ० २५अ०। १०कण्डिकादौ दृश्यम्। कात्यायनशब्दे १८७६पृ० तत्प्रतिनिधिद्रव्यादि दर्शितम्।

**सोमगर्भ** पु० सोमस्य तदात्मकात्मतद्रूपस्योत्पत्तिस्य गर्भः स्थानम्। विष्णौ त्रिका०।

**सोमज** न० सोमात् तत्चरितौषधिस्यरसपानात् जायते जन-ड। १दुग्धे हेमच०। २चन्द्रजाते त्रि०। ३बुधे पु०।

**सोमतीर्थ** न० सोमेन तपस्तप्त्वा कृतं तीर्थम् शाक०। प्रभास-तीर्थ त्रिका०। "यत्र तप्तं तपस्तेन सोमेन सुमहात्मना। पञ्च वर्षसहस्राणि तथैवोर्द्ध्वमुखः स्थितः। एकस्मात् ततः पुनः पञ्च पञ्च मौनव्रतस्तथा। तथैवैकेन पादेन दश पञ्च च तिष्ठता। एवमुग्रं तपः कृत्वा कान्तिमानभवच्च सः। ममापराधान् सुकृत ब्राह्मणानां पतिस्तथा" वराहपु०।

**सोमधारा** स्त्री सोमस्य धारेव। आकाशे त्रिका०।

**सोमप** पु० सोमं तद्रसं पिबति पा-क। १यज्ञे सोमरसपान-कर्त्तरि २पितृगणभेदे व०व०। पा-क्विप् सोमपाप्यत्र।

**सोमपत्र** पु० सोमस्य ओषधिविशेषस्येव पत्रमस्य। (उलुखड़) तृणभेदे शब्दच०।

**सोमपीति(थि)न्** पु० पीतमनेन इनि सोमं पीतौ पृषो० वा तस्य थः। यज्ञे सोमरसपायिनि अमरः। पा-क्विप् सोमपोवाप्यत्र।

**सोमबन्धु** पु० सोमस्य बन्धुः, सोमो बन्धुरस्य वा। १सूर्य्ये तद्वृद्धिकरत्वात् तस्य तथात्वम्। २चन्द्रजे बुधे पु० ज्यो० २कुमुदे न०। [त्रिव्ये क्षत्रिये च ४जिनराजभेदे हेम०।

**सोमभू** पु० सोम एव भूरुत्पत्तिस्थानं यस्य। १बुधग्रहे २चन्द्र-

**सोमयाग** पु० सोमनामको यागः। त्रिवर्षसाध्ये सोमरस-पानाङ्गके यागभेदे।

"नारद उवाच "सोमयागविधानञ्च ब्रूहि मां मुनि-सत्तम!। कथं तं कारयामास गुरुश्च किं फलं परम्"। नारायण उवाच "ब्रह्महत्याप्रशमनं सोमयज्ञफलं मुने!। वर्षं सोमलतापानं यतमानः करोति च। वर्षमेकं फलं भुक्त्वा वर्षमेकं जलं सदा। त्रैवार्षिकमिदं यागं सर्वपापप्रणाशनम्। यस्य त्रैवार्षिकं धान्यं नि-हितं भृतिहेतवे। अधिकं वापि विद्येत स सोमं पातु-मर्हति। महाराजस्य देवो वा यागं कर्त्तुमलं मुने!। न सर्वसाध्यो यज्ञोऽयं बहुघ्नो बहुदक्षिणः" ब्रह्मवै० श्रीकृष्णज० ६० अ०। सोमशब्दे दृश्यम्।

**सोमयाजिन्** पु० सोमेन यजते यज-णिनि। सोमयाग-कर्त्तरि। तस्य सौत्रामण्यामधिकारः सौत्रामणीशब्दे दृश्यम्।

**सोमयोनि** न० सोमः योनिरस्य। चन्दनभेदे शब्दच०।

**सोमराजी** स्त्री सोमेन राजते राज-अच् गौरा० ङीष्। (सोमराज) १ओषधिभेदे। २वाकुच्यां भावप्र०। "अवल्गुजा वाकुची स्यात् सोमराजी सुपर्णिका" इत्युपक्रमे "वाकुची मधुरा तिक्ता कटुपाका रसायनी। विष्टम्भहृद्धिमा रुच्या सरा श्लेष्मास्रपित्तनुत्। रूक्षा हृद्या श्वासकुष्ठमेहज्वरकृमिप्रणुत्। तत्फलं पित्तलं कुष्ठ-कफानिलहरं कटु। केश्यं त्वच्यं कृमिश्वासकासशोथाम-पाण्डुहृत्" भावप्र०। स्वार्थे क। सोमराजिकाप्यत्र। राज-णिनि। सोमराजिन् अप्यत्र पु० अमरः। [राजनि०

**सोमलता** स्त्री सू-मन् कर्म०। स्वनामख्यातायां लतायाम्

**सोमलतिका** स्त्री सोमलतेव इवार्थे कन् अत इत्त्वम्। १गुडूच्याम् राजनि०। स्वार्थे क। २सोमलतायाञ्च।

**सोमवंश** पु० सोमस्य वंशः। १चन्द्रवंशे २चन्द्रावधिकै गोत्र-परम्पराजाते क्षत्रिये भाग० ९स्कन्धे दृश्यम्।

**सोमवल्क** पु० सोमस्येव वल्कोऽस्य। १करञ्जे जटा०। २रोठा-करञ्जे राजनि० ३श्वेतखदिरे ४कट्फले च मेदि०।

**सोमवल्लिका** स्त्री सोमवल्लीव कायति कै-क। सोमराज्याम् अमरः। स्वार्थे क। २सोमलतायाम्। सोमवल्लरीत्यप्यत्र।

**सोमवल्ली** स्त्री सोमाया लतायाः वल्ली। १गुडूच्याम् अमरः। सोमरूपा वल्ली। २सोमलतायाम् भरतः। ३सोमराज्यां शब्दर०। ४ब्राह्म्यां ५सुदर्शनायां ६पातालगरुड्यां राजनि०। "सोमवल्ली महागुल्मा यज्ञश्रेष्ठा धनुर्लता। सोमार्हा गुल्मवल्ली च यज्ञवल्ली द्विजप्रिया। सोमक्षीरा च सोमा च यज्ञाङ्गा रुद्रसंख्यया। सोमवल्ली कटुः शीता मधुरा पित्तदाहहृत्। तृष्णा विशेषात् शमनी पावनी यज्ञसाधनी" राजनि०।

**सोमवामिन्** पु० सोमं तद्रसं वमति वम-णिनि। सोमरस-पानाधिक्ये मुखेन सोमवमनकर्त्तरि तस्य सौत्रामण्या-मधिकारः सौत्रामणीशब्दे दृश्यम्।

**सोमवार** पु० सोमस्वामिको वारः। चन्द्रस्वामिके दिने।

**सोमविक्रयिन्** पु० सोमं विक्रीणाति वि+क्री-णिनि। सोम-लतायाः विक्रेतरि "पापो हि सोमविक्रयी" श्रुतिः।

**सोमवृक्ष** पु० सोम इव वृक्षः। १कट्फलवृक्षे रत्नमा० २श्वेत-खदिरे च राजनि०। [राजनि०।

**सोमसार** पु० सोम इव शुभ्रः सारोऽस्य। श्वेतखदिरे

**सोमसिद्धान्त** पु० सोमकृतः सिद्धान्तः। चन्द्रप्रोक्ते ज्यो-तिषसिद्धान्तग्रन्थभेदे जटा०। [त्रिका०।

**सोमसिन्धु** पु० सोमस्यामृतस्य सिन्धुरिव आधारः। विष्णौ

**सोमसुत्** पु॰ सोमं सुतवान् सु—भूते क्विप्। यज्ञार्थं कृतसोमलतानिष्पीड़ने शि॰ कौ॰।

**सोमसुता** स्त्री ६त॰। नर्मदानद्याम् राजनि॰। २बुधे पु॰ सामोद्भवादयोऽप्यत्र यथायथम् पुंस्त्री॰। [शब्दार्थचि॰

**सोमसुत्वन्** पु॰ सोमं सुतवान् सु—भूते क्वनिप्। कृतसोमरसे

**सोमसूत्र** न॰ सोमस्य जलस्य सूत्रमिव प्रणाली। १जलनिर्गम प्रणाल्याम् शिवलिङ्गस्यगौरीपट्टस्य २जलनिर्गमस्थाने च "सोमसूत्रं न लङ्घयेत्" तन्त्रम्। [रक्तकैरवे रत्नमा॰।

**सोमाख्य** न॰ सोमं लताभेदमाख्यातिवर्णेन आ+ख्या-क।

**सोमातिपूत** पु॰ सोमोऽतिपूतो वान्तो मुखभिन्नच्छिद्रेण येन अति+पू-कर्म्मणि क्त। कृते सोमरसपाने आधिक्यात् मुखभिन्ननासिकादिच्छिद्रैः सोमरसवमनकर्त्तरि तस्य सौत्रामण्यामधिकारः सौत्रामणीशब्दे दृश्यः।

**सोल्लुण्ठ** त्रि॰ सह उल्लुण्ठेन सादेशः। भूमौ पार्श्वपरिवर्त्तादियुक्ते १अश्वादौ हला॰ २स्तुते निन्दापरतया निन्दाया वा स्तुतिपरतया युक्ते ३वाक्ये च।

**सोल्लुण्ठन** न सह उल्लुण्ठनेन सादेशः। अन्यथास्थितस्य अन्यरूपेण परिवर्त्तनसहिते वाक्ये (स्तुतिपरस्य निन्दापरता निन्दापरस्य च स्तुतिपरता इत्येवं कल्पके वाक्ये)।

**सोष्यन्तीहोम** पु॰ सोष्यन्तीं सूतापन्नामासन्नप्रसवां ज्ञात्वा कार्य्यः होमः। सोष्यन्त्या आसन्नप्रसवाया हिताय कर्त्तव्ये होमभेदे तत्प्रकारः सं॰ त॰ दृश्यः।

**सौकर्य्य** न॰ सुकरस्य भावः कर्म वा ष्यञ्। १अनायाससाध्यत्वे जटा॰। २सुकरस्य कर्मणि च।

**सौखसुप्तिक** त्रि॰ सुखसुप्तिं सुखेन शयनं पृच्छति ठञ्। प्रातःकाले सुखशयनप्रच्छके वैतालिकादौ हेमच॰।

**सौखिक** त्रि॰ सुखं प्रयोजनमस्य ठक्। सुखाभिलाषिणि (सौखिन)।

**सौख्य** न॰ सुखमेव चातु॰ ष्यञ्। सुखे हेमच॰।

**सौगत** पु॰ सुगत एव अण्। १सुगते बुद्धभेदे हेमच॰ तस्येदम् अण्। २सुगतसम्बन्धिनि त्रि॰। सुगतमतमधीते अण्। ३सुगतमताध्यायिनि त्रि॰। [शब्दर॰।

**सौगन्ध** न॰ सुष्ठु गन्धोऽस्य स्वार्थे अण्। कत्तृणे रामकर्पूरे

**सौगन्धिक** न॰ सुष्ठु गन्धः सुगन्धः सोऽस्त्यस्य ठन् स्वार्थे अण्। १कह्लारे अमरः। २सुगन्धके पु॰ अमरः। सुगन्धेन व्यवहरति ठक्। (गन्धी) ३सुगन्धव्यवहर्त्तरि त्रि॰ मेदि॰। ४पद्मभेदे भा॰ व॰ सौगन्धिकाहरणपर्व। [२सुगन्धौ।

**सौगन्ध्य** न॰ सुगन्धस्य भावः ष्यञ्। १सद्गन्धे। स्वार्थे ष्यञ्।

**सौचिक** पु॰ सूचीं तत्कर्मसीवनमुपजीवति ठन्। (दरजी) सीवनकारके अमरः। इन्। सौचि तथार्थे शब्दर॰।

**सौजन्य** न॰ सुजनस्य भावः ष्यञ्। १सुजनतायां २सद्व्यवहारे च "सौजन्यजन्यं यशः" मल्लिनाथः।

**सौण्डी** स्त्री शुण्डा तदाकारोऽस्त्यस्याः अण् ङीप् पृषो॰ शस्य सः। गजपिप्पल्याम् शब्दच॰।

**सौत्र** पु॰ पाणिन्यादिभिः सूत्रेण कर्मविशेषाय पठितः अण्। भ्वाद्यादिदशगणीयभिन्नेषु सूत्रमात्रे कार्य्यभेदार्थं पठितेषु १धातुषु। सूत्रं यज्ञसूत्रमर्हति अण्। २विप्रे हेमच॰।

**सौत्रामणी** स्त्री सुत्रामा इन्द्रो देवताऽस्य अण् मपूर्वत्वात् न टिलोपः णत्वम्। इष्टिभेदे तत्र हि सुरापानं विप्राणां विहितम्। "सौत्रामण्यां सुरां पिबेत्" स्मृतिः। स च यज्ञः ऋद्धिकामस्य ब्राह्मणस्यैव कर्त्तव्यः तत्राधिकारिविशेषः कात्या॰श्रौ॰१९।१ क॰ उक्तः। "ब्राह्मणयज्ञः सौत्रामण्यृद्धिकामस्य" सू॰। "ब्राह्मणग्रहणं क्षत्रियवैश्ययोर्निवृत्त्यर्थम्" कर्कः। "अग्निचित्सोमयाजिसोमातिपूतसोमवामिनाम्" सू॰ "एभिश्च निमित्तैः सौत्रामणी भवति। तत्राग्निचित्सोमयाजीति ग्रहणम् अग्निमतः सोमस्याङ्गं यथा स्यादिति स हि फलवान् निष्फलोऽग्निरिति एवं च सत्यग्निमत्सोमयागान्ते सौत्रामणी भवति। ननु चानग्निमतोऽपि सोमस्याङ्गत्वेन सौत्रामणी श्रूयते "सोमेनेष्ट्वा सौत्रामण्या यजेतेति नैतदेवम् अग्निं चित्वा सौत्रामण्या यजेतेत्यस्य वाक्यस्याग्निप्रकरणे श्रुतत्वात् तदङ्गता युक्ता यस्य प्रकरणम् तस्यान्यद्विधीयमानं तदङ्गमेव भवतीति न्याय्यम्। सोमेनेष्ट्वा सौत्रामण्या यजेतेति सौत्रामणीप्रकरणे पाठः तेन प्रस्तुतविपरिवृत्त्या सोमस्यैव सौत्रामण्यङ्गता भवति न सौत्रामण्याः सोमाङ्गता यथा "वाजपेयेनेष्ट्वा वृहस्पतिसवेन यजेतेति" वाजपेयं प्रकृत्य विधानात् वाजपेयाङ्गता वृहस्पतिसवस्य, तस्मान्नानग्निमति सोमे सौत्रामणी "सोमेनेष्ट्वा सौत्रामण्या यजेतेति किमर्थस्तर्हि पाठः अग्निमत् सोमस्यानुवादोऽयमित्यदोषः। यद्वाऽग्निं चित्वेत्यस्यैव शेषोऽयम् अग्निमता सोमेनेष्ट्वेति तदुक्तं भवति। सोमातिपूतसोमवामिनोस्तु सौत्रामणी भवति शाखान्तरश्रवणात् सोमातिपूतः सोमवामी च ब्राह्मण एव न हि क्षत्रियवैश्ययोरेतद्विशेषणमिति ननु च सोमकार्य्ये तयोरपि न्यग्रोधविधानम् तेन तदतिपवने तद्वमने च किमिति न भवति नैतदेवं यदि नाम कार्य्यापत्त्या धर्मप्राप्तिर्भवति न

त्वार्य सोमधर्मः, किं तर्हि तदतिपवने यागान्तरविधानमिति। अग्निचितस्तु वर्णत्रयस्यापि भवति अग्निसंयोगविधानात्। अग्निचितः तथा सोमयाजिनः तथा सोमातिपूतस्य तथा सोमवामिनः सुखव्यतिरिक्तेभ्यो नासिकाकर्णगुदादिच्छिद्रेभ्यः यस्य सोमः स्रवति स सोमातिपूत इत्युच्यते सुखेन यः सोमं वमति स सोमवामी" सं०व्या०। "राज्ञोऽपरुद्धस्य च सौत्रामणी भवति" सू०। "दुष्टरीतुं पौंसायनो रुद्ध आसेति" तद्विधानात्। स्वराज्यात् प्राच्यावितस्य राज्ञः स्वराज्यप्राप्त्यर्थम्" कर्कः। "अलभ्यमानेऽपि पशोः" सू०। "सौत्रामणी भवति पशुयोग्यः सन् यो नाम पशुं न विन्दते सोऽलभ्यपुरपशुः" कर्कः।

तत्र सुरापच्यवनप्रकारः तत्रैवोक्तः

"दक्षिणेन हुत्वा नग्नहुचूर्णानि कृत्वा तांश्च व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य चूर्णैः संसृज्य निदधाति तन्मासरम्" सू०। "दक्षिणेन हार्हपत्यं प्रवेश्याम्यगारम् नग्नहुचूर्णादि कृत्वा नग्नहुः किण्व उच्यते तांश्च शष्पादींश्चूर्णयित्वा व्रीहिश्यामाकौदनयोः पृथगाचामौ विनिमय्य चूर्णैः संसृज्य निदधाति तन्मासरमुच्यते व्रीहिश्यामाकाभ्यां च सुरा निष्पाद्यते सा च यागसाधनम्। तेन सा तद्धर्मैरभिसम्बध्यते अतस्तयोश्चतुर्मुष्टिकग्रहणपूर्वकम् पृथगोदनौ निष्पाद्येते" कर्कः। "नग्नहुचूर्णानि कृत्वा नग्नहुशब्दार्थमाह "सर्जत्वक् त्रिफला चैव शुण्ठी चैव पुनर्नवा। चतुर्जातकसंयुक्ता पिप्पली गजपिप्पली। वंशोऽवका हस्तक्षला चित्रकं चेन्द्रवारुणी। अश्वगन्धा समुत्पाद्य मूलान्येतानि निर्दिशेत्। धान्यकं च यवानी च जीरकं कृष्णजीरकम्। द्वे हरिद्रे वचा चैव विरूढा व्रीहयो यवाः" इति। क्रयणानन्तरं तानि शष्पादीन्यादाय दक्षिणेन हुत्वाऽन्यगारं प्रवेश्य पूर्वं नग्नहुचूर्णानि कृत्वा सर्जत्वगाद्यौषधानि तूष्णीं पिष्ट्वा तान् शष्पतोक्मलाजान् चूर्णीकृत्य दर्शपूर्णमासधर्मेण पात्रासादनादि शम्यामाकचतुर्मुष्टिकग्रहणपूर्वकं फलीकरणान्तं समन्त्रकं कृत्वा बहुतरोदके पृथक् पृथक् चरू पक्त्वा शृतात्मभुनानन्तरं व्रीहिश्यामाकौदनयोः पृथगाचामौ निषिच्य पृथगभिन्नयोः पात्रयोरुभयोर्मध्यादतिरिक्तमुष्णोदकमवमाप्य तदुदकं नग्नहुप्रभृतिभिश्चतुर्भिश्चूर्णैः संसृज्य निदधाति स्थापयति तन्मासरम्। तस्य चूर्णसंसृष्टस्याचामस्य मासरमिति संज्ञा" सं०व्या०"ओदनौ चूर्णमासरैः संसृज्य स्वाद्वीं त्वाऽद्युना ते" इति त्रिरात्रं निदधाति" सू०। "चूर्णमासरसंसृष्टावोदनौ "स्वाद्वीं त्वेति" अंशुना ते इति" मन्त्राभ्यां कुम्भ्यां प्रक्षिपति क्षिप्त्वा च त्रिरात्रं निधेया सुरा" कर्कः। "एवमाचामयोश्चूर्णसंसर्गानन्तरमोदनौ चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वा स्वादुनेति यजु० १९।१ "अंशुना ते यजु०" २०।२७ द्वाभ्यां मन्त्राभ्यामेकस्मिन् महति पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां च संसृज्य त्रिरात्रं निदधाति सुगुप्ते देशे स्थापयति शालाया नैरृतकोणे गर्त्तं कृत्वा तत्र स्थापयतीति जीर्णः सम्प्रदायः" तिस्रो रात्रीरित्यादिसूत्रेः "एकस्याः पयसापाकृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति" सू०। सुरां परिषिञ्चति "एकस्यै० परिषिञ्चतीति" वचनात्। अश्विनादुह्यमानस्याकरणं कर्त्तव्यम् तस्यापूर्वत्वादप्रधानत्वाच्च पयसः अश्विभ्यामपाकरोमीति गोस्पर्शनमात्रमेवेति सम्प्रदायः। अपरे तु धर्मवदपाकरणमिच्छन्ति" कर्कः "शष्पचूर्णानि चावपति" सू० "चशब्दात् सुरायाम्" कर्कः। "सारस्वतेन द्वयोः प्रातः" सू०। "प्रातःशब्देन च द्वितीयमहरमभिधीयते तत्रापि च रात्रावेवाभिषेकः प्रथमां रात्रिं परिषिञ्चतीति प्रकृत्य "द्वयोर्दुग्धेन द्वितीयामित्याह द्वितीयाम् रात्रिमिति गम्यते" कर्कः। "प्रातःशब्देन श्वोऽभिधीयते" सं०व्या० "तोक्मचूर्णानि च" सू०। "आवपति" ऐन्द्रेणोत्तमे तिसृणाम्" सू० "गवां दुग्धे नैन्द्रेण परिषिञ्चति" कर्कः उत्तमे तृतीयेऽहनि संध्या। "लाजचूर्णानि च" सू० "आवपति अत्र चूर्णानां पयसश्च संस्कारकत्वम् साधनं तु व्रीहिश्यामाकावेव अतस्तयोरेव देवतोद्देशेन ग्रहणम्" कर्कः। यजु० १९अ० वेददीपे तु तदङ्गसुराच्यवनप्रकारः स्पष्टः दर्शितो यथा "अथ सौत्रामणीमन्त्रास्त्रिभिरध्यायैः। क्षत्रियकामस्याग्निचितो मुखेतरच्छिद्रसोमवामिनो सुखेन सोमवामिनो राज्यच्युतस्य पशुकामस्य च सौत्रामणीयागः। अन्तःपात्यस्थाने गोचर्मणि एतानि स्थापयेत् सोमं सुराविक्रयिणः क्रीवाद्वा क्रीत्वा सीसेन शष्पं क्रीत्वा ऊर्णाभिस्तोक्मान् सूत्रेण लाजान् केनचिद्द्रव्येण नग्नहुम् विरूढा व्रीहयः शष्पम् विरूढा यवास्तोक्माः भृष्टव्रीहयो लाजाः सर्जत्वक्त्रिफलाशुण्ठीपुनर्नवाचतुर्जातकपिप्पलीगजवंशावकाहस्तक्षलाचित्रकेन्द्रवारुण्यश्वगन्धाधान्यकयवानीजीरकद्वयहरिद्राद्वयविरूढयवव्रीहय एकीकृता नग्नहुः। शष्पतोक्मलाजनग्नहून् दक्षिणद्वारेणाग्निगृहं नीत्वा संचूर्ण्य

दर्शपौर्णमासधर्म्मेण व्रीहिश्यामाकयोश्चरू बहुजले पक्का स्थालीद्वयनानन्तरं तयोश्चर्वोर्निःस्रावमुष्णं पृथक्पात्रयोराढाय शष्पादिचतुर्णां चूर्णैः संसृज्य स्थापयेत् इयं चूर्णाचामरूपं मासराख्यम्"। "ओदनौ चूर्णमासरैः संसृज्य स्वाद्वीं त्वा अंशुनात इति त्रिरात्रं निदधाति" का० एवमाचामयोस्तु चूर्णसंसर्गे मासरत्वनिष्पादनानन्तरमोदनौ व्रीहिश्यामाकचरू चतुर्भिश्चूर्णैः संसृज्य स्वाद्वीं त्वेति मन्त्रेण अंशुना ते इति विंशाध्यायसप्तविंशया ऋचा चैकस्मिन् पात्रे चूर्णसंसृष्टावोदनौ मासराभ्यां संसृज्य त्रिरात्रं शालानैर्ऋतकोणे गर्त्तं कृत्वा तत्र स्थापयेत्। अयमर्थः चरू उद्धास्य द्वयोः पृथगाचामग्रहणम् ततः शष्पतोक्मलाजचूर्णानां पृथक् त्रिधा कृतानां तृतीयांशं द्वेधा कृत्वाचामयोः क्षिपेत् ततो नग्नहुचूर्णं द्वेधा कृत्वैकमर्धं द्विधा विभज्याचामयोः क्षिपेत्। एवं चूर्णसंसृष्टाचामयोर्मासरसंज्ञा। ततः शष्पतोक्मलाजचूर्णानां द्वितीयं तृतीयांशं द्विधा कृत्वैकैकं भागमोदनयोः क्षिपेत् नग्नहुचूर्णद्वितीयार्द्धं द्वेधा कृत्वोदनयोः क्षिपेत् तत ओदनावेकपात्रे कृत्वा तत्राचामौ क्षिपेत् ततः "स्वाद्वीं त्वा" "अंशुना ते" इति मन्त्राभ्यां चूर्णमासरैः सहौदनयोरालोडनेन संसर्गः कार्य्यः ततस्त्रिरात्रनिधानम् शष्पतोक्मलाजचूर्णतृतीयांशानां प्रतिदिनं सुरायां निवापार्थं रक्षणमिति। एकस्या पयस्यायाः कृतेनाश्विनेन परिषिञ्चति परीतो षिञ्चतेति शष्पचूर्णानि चावपति स्वारस्वतेन द्वयोः प्रातस्तोक्मचूर्णानि ऐन्द्रेणोत्तमे तिसृणां लाजचूर्णानि च। सायं होमान्तेऽश्विभ्यामपाकरोमीति करेण गां स्पृष्ट्वा एकां तां दुग्ध्वा तत्पयसाध्वर्युः सुरां सिञ्चति परीत इति मन्त्रेण। रक्षित शष्पचूर्णानां तृतीयांशं सुराभाण्डे क्षिपेत्। द्वितीयेऽह्नि निशान्ते सरस्वत्या अपाकरोमीति गावौ स्पृष्ट्वा दोहितेन तयोर्दुग्धेन तेनैव मन्त्रेण सुरां सिञ्चति तोक्मचूर्णतृतीयांशक्षेपश्च। तृतीयेऽह्नि रात्रौ इन्द्राय सुत्राम्णेऽपाकरोमीति तिस्रो गाः स्पृष्ट्वा ता दुग्ध्वैकीकृततत्पयसा सुरां सिञ्चति तेनैव मन्त्रेण तत्र लाजचूर्णतृतीयांशक्षेपश्चेति"। (आचामोभक्तमण्डः)

**सौदामनी** स्त्री सुदामा पर्वतभेदस्तेनैका दिक् तत्प्रान्तभवत्वात् अण्। १विद्युति अमरः। सा हि स्फटिकमयस्य सुदाम्नः पर्वतस्यैकदेशे जाता। २अप्सरोभेदे च हेमच०। सुदामा ऐरावतगजस्तस्य पत्नी ङीप्। ३ऐरावतयोषिति शब्दर०। तत्र ङीपि अतोऽल्लोपे सौदाम्न्यपि शब्दर०।

**सौदायिक** न० सुदायात् बन्धुकुलात् आगतः ठञ्। "ऊढया कन्यया वापि पत्युः पितृगृहेऽथ वा। भर्तुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्" कात्या० स्मृत्युक्ते स्त्रीधनभेदे 'सौदायिकं धनं प्राप्य स्वातन्त्र्यं परिकीर्त्तितम्" स्मृतिः। स्त्रीधनशब्दे दृश्यम्।

**सौदास** पु० सूर्य्यवंश्ये कल्माषपादे नृपतौ।

**सौध** पु०न० सुधया लेपनद्रव्येण रक्तम् अण्। १राजसदनभेदे अमरः। सुधां तद्वर्णमर्हति अण्। २रूप्ये न० ३दुग्धपाषाणे पु० राजनि०। ४सुधासम्बन्धिनि त्रि०।

**सौनन्द** न० सुनन्द+स्वार्थे अण्। बलदेवमुसले हेमच०।

**सौनिक** पु० सूना वध्यस्थानं तदुपलक्षितमांसादि पण्यमस्य ठण्। मांसक्रयविक्रयोपजीविनि व्याधे (कसाइ)। हेमच० सैनिकशब्दे उदा० दृश्यम्।

**सौन्दर्य्य** न० सुन्दरस्य भावः ष्यञ्। १चारुतायां "अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्। सुश्लिष्टः सन्धिबन्धः स्यात् तत्सौन्दर्य्यमुदाहृतम्" उज्ज्वलमण्युक्ते २अङ्गादीनां सन्निवेशभेदे।

**सौपर्ण** न० सुपर्णं गरुडं तद्वर्णमर्हति अण्। १मरकतमणौ २शुण्ठ्यां राजनि०। सुवर्णमधिकृत्य कृतो ग्रन्थः अण्। भा०आ० २०अध्यायावधौ २४अध्यायपर्य्यन्ते ३अवान्तरपर्वभेदे न० ४पातालगरुडीलतायां स्त्री राजनि० ङीप्। तस्येदमण् ५गरुडसम्बन्धिनि त्रि०।

**सौपर्णेय** पु० सुपर्ण्या विनतायाः अपत्यम् ढक्। १गरुडे हेमच० २गायत्र्यादिछन्दःसु "गायत्र्यादीनि छन्दांसि सौपर्णेयानि पक्षिणः" वह्निपु०।

**सौप्तिक** त्रि० सुप्तिकाले रात्रौ भवम् ठञ्। १रात्रियुद्धे जटा०। तमधिकृत्य कृतो ग्रन्थः ठञ्। २महाभारतान्तर्गते पर्वभेदे।

**सौभ** न० सुष्ठु सर्वत्र लोके भाति भा—क स्वार्थे अण्। १कामचारिणि पुरे २हरिश्चन्द्रनृपपुरे जटा०। तस्य राजा अण्। ३राजभेदे स च वासुदेवेन निहतः तत्कथा भा० व० १४अ० अवधि २२अ० पर्य्यन्ते दृश्या।

**सौभद्र** पु० सुभद्रायां भवः अण्। १सुभद्रापुत्रे अभिमन्यौ गीता। सुभद्राय हितः अण्। २विभीतकवृक्षे शब्दच०।

**सौभद्रेय** पु० सुभद्राया अपत्यम् ढक्। सुभद्रासुते अभिमन्यौ

**सौभरि** पु० मुनिविशेषे भाग० ९।१७ अ० ज्यो०त०।

**सौभागिनेय** पु० सुभगाया अपत्यम् ढक् इनङ् च द्विपदवृद्धिः । १सुभगापुत्रे । २तत्कन्यायां स्त्री ङीप् ।

**सौभाग्य** न० सुभगाया भावः ष्यञ् द्विपदवृद्धिः । १पतिप्रियत्वे तदर्थं व्रतं सौभाग्यव्रत व्रतशब्दे ५०६८ पृ० दृश्यम । सुभगायै सुभगाय वा हितं ष्यञ् । २सिन्दूरे ३टङ्कणे च राजनि० । विष्कम्भादिषु मध्ये ४चतुर्थे योगे पु० ज्यो०त० ।

**सौभाग्यचिन्तामणि** पु० औषधभेदे । तल्लक्षणं सारकौ० उक्तं यथा "सौभाग्याम्रतजीरपञ्चलवणव्योषाऽभयाश्वानलानि-सन्द्राभ्रकशुद्धगन्धकरसानेकीकृतान् भावयेत् । निर्गुण्डी-युगम्रङ्गराजकट्फलापामार्गपत्रोत्थवत् प्रत्येकं स्वरसेन सिद्धवटिका घ्नन्ति त्रिदोषोदयम् । येषां शीतमतीव देहमखिलं स्वेदद्रवार्द्रीकृतं निद्रा घोरतरा समस्तकरण-व्यामोहमूढं मनः । शूलश्वासबलासकाससहितं मूर्च्छा-रुचिं टङ्ज्वरं तेषां वै परिहृत्य जीवितमसौ व्याहन्ति मृत्योर्मुखात्" । [ऐन्द्रजालिके हारा० ।

**सौभिक** पु० सौभं कामचारिपुरं तद्धर्म्यास्य शिल्पस्य ठक् ।

**सौमनस्य** न० सुमनसो भावः ष्यञ् । प्रशस्तचित्तत्वे तत्र हितं अण् । २श्राद्धे दत्तस्य पुष्पस्य प्रसादयुक्तचित्त-साधनत्वे "सौमनस्यमस्तु" श्राद्धमन्त्रः ।

**सौमनस्यायनी** स्त्री सौमनस्यमयतेऽनया अय–ल्युट् ङीप् ६त० । १मालत्याम् २तत्कलिकायाञ्च त्रिका० ।

**सौमिकी** स्त्री सोमक्रतुदीक्षा प्रयोजनमस्य ठक् ङीप् । सोमयागार्थदीक्षणीयेष्टौ हेमच० । [लक्ष्मणे शब्दच० ।

**सौमित्र(त्रि)** पु० सुमित्रायां भवः अण् बाह्वादि० इञ् वा

**सौमेधिक** पु० सुमेधया निर्वृत्तः ठक् । १सिद्धियुते हारा० । २शोभनमेधायुते च त्रि० ।

**सौम्य** त्रि० सोमो देवताऽस्य तस्येदं वा ञ्य । १सोमदेवताके २हविरादौ २तत्सम्बन्धिनि । टित्वात् स्त्रियां ङीप् । सोम इव शाखादित्वात् य स्वार्थे अण् । ३मनोहरे ४प्रियदर्शने ५अनुग्रे च त्रि० मेदि० ६बुधे पु० अमरः । ततः स्वार्थिकाणप्रत्ययाभावे सौम्योऽप्युभयत्र । "सदेव सोम्येदमग्र आसीत्" इति श्रुतिः । ज्योतिषोक्ते ७शुभ-ग्रहे ८वृषादिसमराशौ च ९उडुम्बरवृक्षे राजनि० । १०भास्वरे त्रि० धरणिः । ११सोमपायिनि विप्रे पु०शब्दमा० अष्टादशद्वीपमध्ये १२द्वीपभेदे पु० "गन्धर्वो वरुणः सौम्यः वहलः कङ्कु एव च । कुमुदस्य कशेरुश्च नागो भट्टारक-स्तथा । चन्द्रेन्द्रमलयाः शङ्खयवाङ्कगभस्तिमान् । ताम्रकृश्च कुमारी च तत्र द्वीपा दशाष्टभिः" शब्दमा० । १३सौम्यकृच्छ्रे व्रतभेदे । "अतिकृच्छ्रः पर्णकृच्छ्रः सौम्यः कृच्छ्रोऽतिकृच्छ्रकः" प्रा० त० । सौम्यकृच्छ्रशब्दे दृश्यम् ।

**सौम्यकृच्छ्र** पु० कर्म० सोमदेवताके कृच्छ्रसाध्ये व्रतभेदे । "पिण्याकाचामतक्राम्बुसक्तूनां प्रतिवासरम् । एकैकमुप-वासश्च कृच्छ्रः सौम्योऽयमुच्यते" याज्ञ० । पिण्याकः खलिः आचामः भक्तमण्डः । एष षडहसाध्यः प्रा०वि० ।

**सौम्यगन्धी** स्त्री सौम्यः अनुग्रः गन्धो यस्याः गौरा० ङीष् । शतपत्त्र्याम् राजनि० ।

**सौम्यग्रह** पु० कर्म० । ज्योतिषोक्ते पूर्णचन्द्रपापायुतबुध-गुरुशुक्ररूपे शुभग्रहे "अर्कार्केन्द्वर्कसौरारा: पापाः सौम्यास्तथाऽपरे । पापयुक्तो बुधः पापो राहुकेतू च पापकौ" ज्यो० त० । [तथात्वम् ।

**सौम्यधातु** पु० कर्म० । कफे राजनि० तस्य सोमजातत्वात्

**सौम्या** स्त्री सोमो देवताऽस्य ञ्य सोम इव शाखा० य स्वार्थे अण् वा । १दुर्गायां देवीमा० । २महेन्द्रवारुण्यां ३रुद्रजटायां ४महाज्योतिष्मत्यां ५महिषवल्ल्यां ६गुञ्जायां ७शालपर्ण्यां ८ब्राह्म्यां ९शठ्यां १०मल्लिकायां च राजनि० मृगशिरोनक्षत्रशिरःस्थासु पञ्चतारकासु विश्वः ।

**सौर** पु० सूरस्य इदम् सूरो देवताऽस्य वा अण् । १सूर्य-पुत्रे शनैश्चरे २यमे च । ३सूर्य्यदेवताके त्रि० स्त्रियां ङीप् । सूरेण निर्वृत्तः अण् । एकैकराशौ तदंशेषु वा सूर्य्यगतिसाध्ये ४दिनमासादौ त्रि० । "अध्यायनञ्च यज्ञचारकर्म सौरेण मानेन सदाऽध्यवस्येत्" ज्यो०त० । "विवाहादौ स्मृतः सौरः" इति स्मृतिः । ५उडुम्बरवृक्षे पु०राजनि० ६सूर्य्योपासके त्रि० ७गुरुभेदे "गौड़ाः शाल्वोद्भवाः सौराः मागधाः कोङ्कणास्तथा । कोशलाश्च दशा-र्णाश्च गुरवः सप्त मध्यमाः" तन्त्रसा० ।

**सौरज** पु० सूरस्यायम् अण् सौरः आलोकस्ततो जायते जन–ड । तुम्बुरुवृक्षे राजनि० ।

**सौरभ** न० सुरभेर्भावः अण् । १सद्गन्धे सौरभमस्त्यस्य अच् सुरभिरस्यास्ति अण् वा । कुङ्कुमे त्रिका० २बोले च राजनि० ।

**सौरभेय** पु० सुरभेरपत्यम् ढक् । १गवि स्त्रियां ङीप् । "सौरभेयीभ्य एव च" गोदानमन्त्रः । तस्या इदम् ढक् । २सुरभिसम्बन्धिनि त्रि० ।

**सौरसेय** पु० सुरसाया अपत्यम् ढक् । स्कन्दे शब्दमा० ।

**सौराष्ट्र** पु० सुष्टु राष्ट्रमस्यास्ति प्रज्ञा० अण् । (सुरट) १देश-भेदे जटा० । सुराष्ट्रे भवः अण् । २सुराष्ट्रदेशभवे त्रि०

३कुन्दुरुके पु० राजनि० ४कांस्ये न० ५तुवर्य्यां स्त्री राजनि० टाप्। सुगन्धिमृत्तिकाभेदे स्त्री रत्नमा० ङीप् संज्ञायां कन्। सौराष्ट्रक पञ्चलौहे न० हेमच०।

**सौराष्ट्रिक** न० सुराष्ट्रदेशे भवः ठक्। विषभेदे शब्दर०।

**सौरि** पु० सूरस्यापत्यम् इञ्। १शनैश्चरे "सौरिवारेऽष्टता-नीति" ज्यो०त०। २यमे ३कर्णे ४सुग्रीवे च पु०। ५असन-वृक्षे ६आदित्यभक्तायां राजनि०।

**सौरिक** पु० सुराणां देवानामधिवासाय हितः ठक्। १स्वर्गे स्वार्थे क। २सूर्य्यापत्ये शनैश्चरादौ।

**सौरिरत्न** न० सौरिप्रियं रत्नम् शाक०। नीलके मणौ राजनि०

**सौरेय** पु० सुरायै हितम् ढक्। शुक्लझिण्टाम् स्वार्थे क तत्रैव। "सौरेयः कुष्ठवातास्रकफकण्डूविषापहः। तिक्तोष्णो मधुरो दन्त्यः सुस्निग्धः केशरञ्जनः" भावप्र०।

**सौल्विक** त्रि० सुल्वं ताम्रपात्रादिनिर्माणं शिल्पमस्य ठक्। ताम्रमयपात्रनिर्माणकर्त्तरि (कासारि)। वणिग्भेदे

**सौव** त्रि० स्वस्येदम् स्वरी इदम् वा अण् अव्ययटिलोपो न वृद्धिः वात्पूर्वमौत्। १आत्मसम्बन्धिनि २स्वर्गसम्बन्धिनि।

**सौवग्रामिक** त्रि० स्वग्रामे भवः ठक् न वृद्धिः वात्पूर्व मौत्। स्वग्रामभवे पदार्थे।

**सौवर्चल** पु० सुवर्चलदेशे भवम् अण्। रुचकलवणे अमरः।

**सौवर्णभेदिनी** स्त्री सुवर्णस्य विकारः अण् सौवर्णमिव भिनत्ति प्रकाशते भिद-णिनि। प्रियङ्गौ शब्दमा०।

**सौवस्तिक** पु० स्वस्तिकरणे कुशलः ठक् न वृद्धिः वात्पूर्व मौत्। पुरोहिते हेमच०। [रक्षके अमरः।

**सौविद** पु० सुवेत्ति सु+विद-क स्वार्थेऽण्। अन्तःपुर-

**सौविदल्ल** पु० सुष्ठु विदन् नृपः तं लाति ला-क स्वार्थेऽण्। अन्तःपुररक्षके अमरः।

**सौवीर** न० सुष्ठु वीरो यत्र सुवीरो देशभेदः तत्र भवम् अण्। १स्रोतोऽञ्जने २बदरफले "सौवीरन्तु यवैरामैः पक्वैर्वा निस्तुषैः कृतम्। गोधूमैरपि सौवीरम्" इत्या-द्युक्ते ३काञ्जिके अमरः "सौवीरन्तु ग्रहण्यर्शः कफघ्नं भेदि दीपनम्। उदावर्त्ताङ्गमर्दास्थिशूलानाहेषु शस्यते" भावप्र०। बदरवृक्षे पु० राजनि०।

**सौवीरसार** पुं न० कर्म०। स्रोतोऽञ्जने राजनि०।

**सौवीराञ्जन** न० सौवीराख्यमञ्जनम्। अञ्जनभेदे अमरः स्वार्थे क। काञ्जिकभेदे न०।

**सौष्ठव** न० सुष्ठु भद्रं तस्य भावः अण् न टिलोपः। अति-शये "स सौष्ठवौदार्य्यविशेषशालिनीम्" किरा०।

**सौहार्द** न० सुहृदो भावः अण् द्विपदवृद्धिः। १स्नेहे २मित्रत्वे हेमच०। [सौहित्यमाचरेत्" स्मृतिः।

**सौहित्य** न० सुहितस्य तृप्तस्य भावः ष्यञ्। तृप्तौ "नाति-

**सौहृद** न० सुहृदो भावः अण्। मित्रत्वे बन्धुतायाम् हेम०

**स्कद** उत्प्लुत्य गतौ अक० उद्धृतौ आप्लावे च सक० भ्वा० आ० सेट् इदित्। स्कन्दते अस्कन्दिष्ट। [स्कन्दत् त।

**स्कन्द** समाहारे अद०चु०उभ०सक०सेट्। स्कन्दयति ते अच-

**स्कन्द** गतौ शोषणे च भ्वा० पर० सक० अनिट्। स्कन्दति इरित् अस्कदत् अस्कान्त्सीत् चस्कन्द। आ+आक्रमणे

**स्कन्द** पु० स्कन्दते उत्प्लुत्य गच्छति अच्। कार्त्तिकेये अमरः अग्निकुमारशब्दे ५४ पृ० तस्योत्पत्तिरुक्ता। स्कन्दग्रह-स्कन्दापस्मारौ ग्रहशब्दे २७४५ पृ० सुश्रुतोक्तौ दर्शितौ। २नृपतौ जटा० ३देहे त्रिका० ४पारदे राजनि० ५बाल-ग्रहभेदे सुश्रुतः। [४शोषणे च।

**स्कन्दन** न० स्कन्द-ल्युट्। १रेचने त्रिका० २क्षरणे ३गतौ

**स्कन्दांशक** पु० स्कन्दस्यांश एवांशो यस्य कप्। पारदे। तयोः शिववीर्य्यजत्वादेकांशत्वम्।

**स्कन्ध** पु० स्कन्द्यते आरुह्यतेऽसौ सुखेन शाखया वा कर्मणि घञ् पृषो०। १अंसे (कांध) २वृक्षस्य काण्डे (गुँड़ि) अमरः। ३नृपे ४युद्धे ५समूहे ६काये ७भद्रादौ ८छन्दो-भेदे मेदि० सौगतमतसिद्धेषु ९विज्ञानादिषु पञ्चस्कन्धेषु "मुक्ताङ्गस्कन्धपञ्चकम्" माघः। १०पथि शब्दर० ११ग्रन्थ-परिच्छेदे च। "स्कन्धैर्द्वादशभिर्युक्तम्" इति भागवत-विशेषणम्। १२व्यूहे हेमच०। [विहङ्गिकायां हारा०।

**स्कन्धचाप** पु० स्कन्धे चाप इव। वंशादिनिर्मितशिक्याधारे

**स्कन्धज** पु० स्कन्धात् जायते जन-ड। स्कन्धारूढे सल्लक्यादौ "पर्वयोनय इक्ष्वाद्याः स्कन्धजाः सल्लकीमुखाः" हेमच०।

**स्कन्धतरु** पु० स्कन्धप्रधानः तरुः। नारिकेलवृक्षे राजनि०।

**स्कन्धफल** पु० स्कन्धे फलमस्य। १नारिकेलवृक्षे राजनि०। २उडुम्बरवृक्षे च शब्दच०। [शब्दच०।

**स्कन्धबन्धना** स्त्री स्कन्धे बन्धनमिवास्याः। मधुरिकायाम्

**स्कन्धरुह** पु० स्कन्धात् रोहति रुह-क। वटवृक्षे राजनि०।

**स्कन्धवाह** पु० स्कन्धेन वाहयति वह-णिच्-अच्। स्कन्धेन शकटादिवाहके वृषादौ हारा० ण्वुल्। स्कन्धवाहक तत्रैव हेमच०। [शाखायाम् अमरः।

**स्कन्धशाखा** स्त्री स्कन्धात् पतति शाखा। वृक्षस्य प्रधान-

**स्कन्धशृङ्ग** पुंस्त्री० स्कन्धपर्य्यन्तं शृङ्गमस्य। महिषे स्त्रियां ङीष्।

**स्कन्धाग्नि** पु॰स्कन्धजातोऽग्निः। स्थूलकाष्ठजाते वह्नौ जटा॰।

**स्कन्धावार** पु॰ स्कन्धार्थमावारः आ+वृ-घञ्। युद्धार्थ-मुद्युक्तसैन्यानां १स्थापने २तदाधारे कटके च ३राजधान्यां शब्दच॰। [शब्दादौ हेमच॰

**स्कन्धिक** पु॰ स्कन्धस्तेन वहनमस्त्यस्य ठन्। स्कन्धवाहके

**स्कन्धिन्** पु॰ स्कन्धस्तेन वहनमस्त्यस्य इनि। स्कन्धेन वा-हके शब्दादौ रत्नमा॰।

**स्कन्न** त्रि॰ स्कन्द्-क्त। १च्युते अमरः २गलिते ३क्षरिते ४शुष्के ५गते च। भावे क्त। ६क्षरणे न॰।

**स्कन्भ** प्रतिघाते क्र्या॰ स्वा॰ उ॰ सक॰ सेट्। स्कभ्नाति स्कभ्नीते स्कभ्नोति स्कभ्नुते। अस्कम्भीत् अस्कम्भिष्ट। चस्कम्भ चस्क(भ)म्भे। [म्भिष्ट।

**स्कभ** स्तम्भे भ्वा॰ आ॰ सक॰सेट् इदित्। स्कम्भते अस्क-

**स्कु** उद्धृतौ आप्लवने च क्र्या॰ स्वा॰उ॰सक॰ अनिट्। स्कु-नाति स्कुनीते स्कुनोति स्कुनुते। अस्कौषीत् अस्कोष्ट। चुस्काव चुस्कुवे। [स्कुन्दते अस्कुन्दिष्ट।

**स्कुद्** आप्लवने उद्धृतौ च भ्वा॰ आ॰ सक॰ सेट् इदित्।

**स्कुन्भ** रोधने सौ॰ क्र्या॰ स्वादि॰ कार्य्यभागो प॰ सक॰ सेट् स्कुभ्नाति स्कुभ्नोति। अस्कुम्भीत्। उदित् क्त्वा वेट्।

**स्खद** विदारे दि॰ आ॰ सक॰ सेट्। स्खद्यते अस्खदिष्ट घटादि॰ स्खदयति। [स्खदयति स्खादयति।

**स्खल** चले भ्वा॰ प॰अक॰सेट्। स्खलति अस्खालीत् वा घटा॰

**स्खलन** न॰ स्खल-भावे ल्युट्। १चलने २पतने अमरः।

**स्खलित** न॰ स्खल-भावे क्त। १कूटयुद्धादौ प्रज्ञया वीर-मर्य्यादातः १पतने २स्खलनमात्रे च अमरः। कर्त्तरि क्त। ३चलिते त्रि॰।

**स्तन** मेघशब्दे अद॰ चु॰ उभ॰ सक॰ सेट्। स्तनयति ते अतस्तनत् त। बह्वचकत्वान्न षोपदेशः।

**स्तन** पु॰स्तन-अच्। (माइ) स्त्रीणामङ्गभेदे पयोधरे अमरः। "अरोमशौ स्तनौ पीनौ घनावविषमौ शुभौ" स्तनयोः शुभलक्षणं गारुडे ६६अ॰। [शब्दे च मेदि॰।

**स्तनन** न॰ स्तन-ल्युट्। १ध्वनिमात्रे २मेघशब्दे ३कुन्थन-

**स्तनन्धय** पुंस्त्री॰ स्तनं धयति धे-खश् मुम् च। अतिशिशौ षेटश्त्वात् स्त्रियां ङीप्। [अमरः। स्त्रियां टाप्।

**स्तनप** पुंस्त्री॰ स्तनं पिबति पा-क। अतिशिशौ बालके

**स्तनभर** पु॰ ६त॰। १स्थूलस्तनभारे २तदाभोगे च त्रिका॰।

**स्तनयित्नु** पु॰ स्तन-इत्नु। १मेघे २मुस्तके अमरः ३मेघशब्दे मेदि॰ ४विद्युति शब्दर॰। ५मृत्यौ ६रोगे च हेमच॰।

**स्तनवृन्त** पु॰ स्तनस्य वृन्त इवाग्रम्। १स्तनाग्रे चूचुके हेमच॰ स्तनमुखशिखादयोऽप्यत्र हेमच॰। [च।

**स्तनान्तर** न॰ स्तनयोरन्तरम्। १हृदये हेमच॰ २स्तनमध्ये

**स्तनाभोग** पु॰ ६त॰। स्तनस्य परिपूर्णतायाम् त्रिका॰।

**स्तनित** न॰ स्तन-भावे क्त। १मेघशब्दे अमरः। २सुरतादि-शब्दे च। कर्त्तरि-क्त। ३शब्दिते त्रि॰।

**स्तनितफल** पु॰ स्तनिते मेघशब्दे फलति फल-अच्। वि-कङ्कतवृक्षे राजनि॰।

**स्तन्भ** रोधने क्र्या॰ स्वा॰ प॰ सक॰ सेट् उदित् क्त्वा वेट्। स्तभ्नाति स्तभ्नोति इरित् अस्तभत् अस्तम्भीत्। इदित्यन्ये षोपदेश एव न्याय्यः सौत्रोऽयमित्यन्ये तेन न षोपदेशः।

**स्तन्य** न॰स्तने भवम् यत्। स्तनजाते दुग्धे हेमच॰। [भूते च

**स्तब्ध** त्रि॰स्तम्भ-कर्मणि कर्त्तरि वा क्त। १जडीकृते २जडी-

**स्तब्धरोमन्** पु॰ स्तब्धं रोमास्य। १शूकरे अमरः जडीकृत-रोमणि त्रि॰ स्त्रियां वा डाप् ङीप् च।

**स्तम्ब** पु॰ स्था-अम्बच् किच्च पृषो॰। काण्डरहिते झिण्ट-कादौ वृक्षे २तृणमुले ३धान्यादेः गुच्छे च अमरः।

**स्तम्बकरि** पु॰ स्तम्बं गुच्छं करोति कृ-इन्। व्रीहिधान्ये अमरः। [न्मूलके खनित्रादौ अमरः।

**स्तम्बघन** पु॰ स्तम्बो हन्यतेऽनेन हन-क नि॰। स्तम्बो-

**स्तम्बघ्न** त्रि॰ स्तम्बो हन्यतेऽनेन हन-चञर्थे क। स्तम्बो-न्मूलके खनित्रादौ अमरः। स्तम्बहननमप्यत्र।

**स्तम्बपुर** स्त्री स्तम्बप्रधाना पूः न समासान्तः। ताम्रलिप्ते पुरभेदे हेमच॰।

**स्तम्बेरम** पुंस्त्री॰ स्तम्बे तृणादीनां काण्डे गुच्छे गुल्मे वा रमते रम-अच् अलुकस॰। गजे अमरः स्त्रियां ङीष्।

**स्तम्भ** पु॰ स्तम्भ-अच्। (थाम) १स्थूणायाम् अमरः। भावे घञ्। २जडीभावे पु॰।

**स्तम्भन** पु॰ स्तम्भयति स्तम्भ-णिच् ल्यु। कन्दर्पस्य पञ्चसु वाणेषु मध्ये १बाणभेदे जटा॰. भावे ल्युट्। २जडीकरणे न॰। करणे ल्युट्। षट्कर्मान्तर्गते तन्त्रोक्ते ३अभिचारकर्मभेदे

**स्तम्भित** त्रि॰ स्तम्भ जाड्ये णिच्-कर्मणि क्त। जडीकृते

**स्तरिमन्** पु॰ स्तॄ-कर्मणि इमनिच्। तल्पे उणा॰।

**स्तरी** स्त्री स्तॄ-कर्मणि ई। धूमे हेमच॰।

**स्तव** पु॰ स्तु-अप्। १प्रशंसायाम् २स्तुतौ च।

**स्तवक** पु॰ स्तु-वुन् स्था-अवक पृषो॰ वा। गुच्छे अमरः। २ग्रन्थपरिच्छेदे ३समूहे च मेदि॰।

**स्तवेय्य** पु॰ स्तु-एय्य। इन्द्रे उणा॰।

**स्तावक** त्रि॰ स्तु-ण्वुल्। स्तुतिकारके प्रशंसाकारके।

**स्तिमित** न॰ स्तिम-भावे क्त। १आर्द्रतायाम् अमरः। २अचाञ्चल्ये च मेदि॰ कर्त्तरि क्त। ३अचञ्चले ४आर्द्रे च त्रि॰।

**स्तिम्भि** पु॰ स्तिम-इन् मुक् च। १समुद्रे २वायौ च उणा॰।

**स्तीर्वि** पु॰ स्तॄ-क्विन् न वेरित्त्वम्। १आकाशे २रुधिरे ३तृणजातौ ४अध्वर्य्यौ ५पयसि ६शक्रे संक्षिप्तसा॰।

**स्तुत** पु॰ स्तु-कर्म्मणि क्त। स्तुतिकर्म्मणि अमरः।

**स्तुति** स्त्री स्तु-क्तिन्। स्तवे अमरः। [अमरः

**स्तुतिपाठक** पु॰ स्तुतिं पठति पठ-ण्वुल्। राजादेर्वन्दिनि

**स्तुन्भ** रोधने सौ॰ क्र्या॰ स्वा॰ कार्य्यभागी पर॰ सक॰ सेट् उदित् क्त्वावेट्। स्तुभ्नोति स्तुभ्नाति। अस्तुम्भीत्। सौत्रत्वादषोपदेश इत्यन्ये।

**स्तुतिव्रत** पु॰ स्तुतौ व्रतमस्य। स्तुतिपाठके जटा॰। ३६८पृ॰ दृश्यम्

**स्तुत्यर्थवाद** पु॰ ३त॰। प्रशंसया अर्थवादभेदे अर्थवादशब्दे

**स्तुनक** पुंस्त्री॰ स्तु-नकक्। छागे शब्दच॰ स्त्रियां ङीष्।

**स्तुभ** पुंस्त्री॰ स्तुन्भ-मूल॰क। छागे भरतः स्त्रियां ङीष्।

**स्तूप** उच्छ्राये अद॰ चु॰ सक॰ उभ॰ सेट्। स्तूपयति ते अतुस्तूपत् त। बहुच्कत्वात् अषोपदेश एव। ५१७२ पृष्ठे ष्टूप इति धातुः षोपदेशतया प्रमादात् लिखितः।

**स्तूप** पु॰ स्तु-पक् पृषो॰ स्तूप-अच् वा। १राशीकृते मृत्तिकादौ २संघाते ३वले ४निष्प्रयोजने च संक्षिप्त॰।

**स्तृ** विस्तारे स्वा॰ उ॰ सक॰ अनिट्। स्तृणोति स्तृणुते अस्तार्षीत् अस्तृत अस्तरिष्ट। पर्य्युदासान्न षोपदेशः।

**स्तृ** प्रीतौ अक॰ रक्षणे सक॰ स्वा॰ प॰ अनिट्। स्तृणोति अस्तार्षीत्। पर्य्युदासेन अषोपदेश एव।

**स्तॄ** आच्छादने क्र्या॰ प्वा॰ उ॰ सक॰ सेट्। स्तृणाति स्तृणीते अस्तारीत् अस्तरिष्ट अस्तरीष्ट अस्तीर्ष्ट। अयं षोपदेश एव न्याय्यः।

**स्तेन** चौर्य्ये अद॰ चु॰ उभ॰ सक॰ सेट्। स्तेनयति-ते अतिस्तेनत्-त। बहुच्कत्वात् अषोपदेशः।

**स्तेन** न॰ स्तेन-भावे अच्। १चौर्य्ये। कर्त्तरि अच्। २चौरे त्रि॰ अमरः।

**स्ते(ष्टे)प** क्षेपे चु॰ उभ॰ सक॰ सेट्। स्तेपयति-ते अतिस्तिपत्-त। अषोपदेशत्वे मूलं चिन्त्यम्।

**स्तेम** पु॰ स्तिम-घञ् १आर्द्रीभावे २स्नेहे च अमरः।

**स्तेय** न॰ स्तेनस्य भावः यत् नलोपः। १चौर्य्ये अमरः। "प्रत्यक्षं वा परोक्षं वा रात्रौ वा यदि वा दिवा। यत् परद्रव्यहरणं स्तेयं तत्परिकीर्त्तितम्" इत्युक्तेः परद्रव्यापहारः स्तेयं तच्च अष्टादशविवादान्तर्गतविवादपदभेदः तत्स्वरूपादिकं वीरमि॰ उक्तं चौरशब्दे २९६९ पृष्ठादौ दृश्यम्। [ङीप्।

**स्तेयिन्** त्रि॰ स्तेयमस्त्यस्य इनि। परद्रव्यापहारके स्त्रियां

**स्तैन(न्य)** न॰ स्तेनस्य भावः अण्, ष्यञ् वा। १चौर्य्ये परद्रव्यापहरणे। स्तेन एव स्वार्थे ष्यञ्। २चोरे त्रि॰भरतः।

**स्तैमित्य** न॰ स्तिमितस्य भावः ष्यञ्। १जाड्ये २स्नेहे ३आर्द्रीभावे च। [२जलविन्दौ ३अल्पे त्रि॰ अमरः।

**स्तोक** पुंस्त्री॰ स्तुच-घञ्। १चातके मेदि॰ स्त्रियां ङीष्।

**स्तोकक** पुंस्त्री॰ स्तोकाय जलविन्दवे कायति शब्दायते कैक। चातके अमरः स्त्रियां ङीष्।

**स्तोत्र** न॰ स्तु-ष्ट्रन्। १स्तवे-गुणकर्म्मादिभिः प्रशंसने अमरः। "द्रव्यस्तोत्रं कर्मस्तोत्रं विधिस्तोत्रं तथैव च। तथैवाभिजनस्तोत्रं स्तोत्रमेतच्चतुर्विधम्" मत्स्यपु॰ १२२ अ॰ द्रव्याद्युपाधिकतया स्तवस्य चातुर्विध्यमुक्तम्। २स्तुतिसाधने वाक्ये स्तुतिश्च गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनरूपा ऋग्वेदभाष्ये लक्षिता। यथा यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमवगच्छन्ति यद्यपि ष्टुञ्स्तुतौ शब्दस्य स्तुतावित्येकार्थौ तथापि प्रतिगीतमन्त्रसाध्यं स्तोत्रम् अप्रतिगीतमन्त्रसाध्यं शस्त्रमिति तयोर्विवेक इति च तत्रोक्ते प्रतिगीतमन्त्रसाध्ये ३स्तवने गुणकथने च। शस्त्रशब्दे प्रतिगीतमन्त्रे इति यदुक्तं तत्र अप्रगीतमन्त्रे इत्येव बोध्यम्। प्रगीतऋग्जातं शस्त्रमिति छा॰ उ॰ भाष्य॰ टीकायामानन्दगिरिणोक्ते ४प्रगीते ऋग्जाते च।

**स्तोत्रिय** त्रि॰ स्तोत्राय हितं घ। स्तोत्रसाधने ऋगादौ "कत्ययजुङ्कताऽस्मिन् यज्ञे स्तोत्रियाः स्तोष्यन्तीति तिस्र इति कतमास्तास्तिस्रः इति पुरोऽनुवाक्या च याज्या शस्यैव च तृतीया इति" छा॰उ॰। "स्तोत्रिया नाम ऋक्सामसमुदायः" भा॰भा॰। "स्तोत्रिया नाम गीतिविशिष्टा ऋग्जातयः" शत॰ब्रा॰१४।६।१।१२ वाक्यव्याख्यायां सायनभाष्यम्। "यथोक्तस्य स्तोत्रं स्तोत्रियां बर्चं साम वा यजुर्वाऽथर्वाण्यत् कृत्वा यजेत" कात्या॰श्रौ॰ २४।७ २० "एकां स्तोत्रियामेकां ऋचामन्यां कुर्य्यात्" कर्कः।

**स्तोभ** पु॰ स्तुभ-घञ्। १अर्थशून्ये गानादिस्वरपरिपूरणार्थे शब्दभेदे यथा सामवेदे हुङ् हाइ प्रस्तावः। २हेलने ३स्तम्भने च हेमच॰।

स्तोभलक्षणादिकं गानशब्दे २५७३ पृ० दृश्यम् । तत्र लक्षणं वर्णमात्रस्तोभस्य । वाक्यस्तोभस्य तु नव विधाः भवन्ति तदुक्तं "आशास्तिः स्तुतिसंख्याने प्रणवः परिदेवनम् । प्रैषमन्वेषणञ्चैव सृष्टिराख्यानमेव च" एते तु वाक्यस्तोभाः पदस्तोभास्तु पञ्चदश मानग्रन्थेषु दर्शितास्तत एवावगन्तव्याः ।

**स्तोम** श्लाघागुणाविष्करणे अद० चु० उभ० सक० सेट् । स्तोमयति-ते अतुस्तोमत्-त । बहुच्कत्वात् न षोपदेशः ।

**स्तोम** पु० स्तोम-अच् स्तु-मन् वा । १समूहे अमरः । २यज्ञे हेमच० । ३स्तवे ४स्तुतिभेदे ५मस्तके ६धने ७शस्त्रे ८लौहाग्रदण्डे च न० ९वक्रे त्रि० । "नारायणस्तेन स्तोमेन" यजु०३।५२ "कयं स्तोमान् प्रपच्छ ऋ०१।१४।८

**स्त्यान** न० स्त्यै-भावे क्त तस्य नः । १स्नेहे २घनत्वे ३संहतौ ४आलस्ये ५प्रतिशब्दे च विश्वः । कर्त्तरि क्त । ६संहतिकारके ७ध्वनिकारके च त्रि० ।

**स्त्येन** पु० स्त्यै-इनच् । १चोरे अमृते च उणा० ।

**स्त्यै** संहतौ ध्वनौ भ्वा० अक० अनिट् । स्त्यायति अस्त्यासीत् पर्य्युदासात् षोपदेशः ।

**स्त्री** स्त्री स्तु-ड्रट् । योषिति नार्य्याम् अमरः ।

तद्भेदादिकं रतिम० उक्तं यथा

"पद्मिनी चित्रिणी चैव शङ्खिनी हस्तिनी तथा । शशो मृगो वृषोऽश्वश्च स्त्रीपुंसोर्जातिलक्षणम् । भवति कमलनेत्रा नासिकाक्षुद्ररन्ध्रा अविरलकुचयुग्मा चारुकेशी कृशाङ्गी । मृदुवचनसुशीला गीतवाद्यानुरक्ता सकलतनुसुवेशा पद्मिनी१पद्मगन्धा । भवति रतिरसज्ञा नातिखर्वा न दीर्घा तिलकुसुमसुनासा स्निग्धनीलोत्पलाक्षी । घनकठिनकुचाढ्या सुन्दरी बद्धशीला सकलगुणसमेता चित्रिणी२चित्रवक्त्रा । दीर्घातिदीर्घनयना वरसुन्दरी या कामोपभोगरसिका गुणशीलयुक्ता । रेखात्रयेण च विभूषितकण्ठदेशा सम्भोगकेलिरसिका किल शङ्खिनी३ सा । स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रिया या नितम्बखर्वा करिणी४मता सा । शशके पद्मिनी तुष्टा चित्रिणी रमते मृगे । वृषभे शङ्खिनी तुष्टा हस्तिनी रमते हये । पद्मिनी पद्मगन्धा च मीनगन्धा च चित्रिणी । शङ्खिनी क्षारगन्धा च मदगन्धा च हस्तिनी । बाला च तरुणी प्रौढा वृद्धा भवति नायिका । गुणयोगेन रन्तव्या नारी वश्या भवेत् तदा । आ षोडशाद् भवेद् बाला तरुणी त्रिंशका मता । पञ्चपञ्चाशका प्रौढा भवेद्वृद्धा ततः परम् । फलमूलादिभिर्बाला तरुणी रतियोगतः । प्रेमदानादिभिः प्रौढा वृद्धा च दृढताडनात् । बाला तु प्राणदा प्रोक्ता तरुणी प्राणहारिणी । प्रौढा करोति वृद्धत्वं वृद्धा मरणमादिशेत् । अङ्गुष्ठे चरणे च गुल्फनिलये जानुद्वये वस्तिके नाभौ वक्षसि जङ्घयोर्निगदिता कण्ठे कपोलेऽधरे । नेत्रे कर्णयुगे ललाटफलके मौलौ च वामभ्रुवामूर्द्धोर्ध्वचलनक्रमेण कथिता चान्द्री कला पक्षयोः । सीमन्ते नयनेऽधरे च गलके वक्षःस्थले चूचुके नाभौ श्रोणितटे मनोभवगृहे जङ्घातटे गल्फके । गुल्फे पादतले तदङ्गुलितटेऽङ्गुष्ठे च तिष्ठत्यसौ वृद्धिक्षीणतया समं शशिकला पक्षद्वयोर्योषिताम् । शुक्लपक्षे वसेद्वामे पादाङ्गुलिकनिष्ठके । शुक्लप्रतिपदादौ च कृष्णे चाधः प्रलम्बते । पुंसः सव्ये स्त्रियोऽवामे शुक्ले, कृष्णे विपर्य्ययः । एतानि कामस्थानानि ज्ञेयानि नागरैः सदा । बलयुक्ता यदा नारी विपरीतरतिर्भवेत् । सञ्चाल्य तु कलास्थानं रन्तव्या कामिनी तदा । नेत्रे कक्षे कपोले च हृदि पार्श्वद्वयेऽपि च । ग्रीवायां नाभिदेशे च कामी चुम्बति कामिनीम् । मुखे जङ्घे नितम्बे च जघने मदनालये । स्तनयुग्मे सदा प्रीतः कामी चुम्बति कामिनीम् । प्रेमृणा स्त्रियं समालिङ्ग्य शीत्कारं मुखचुम्बनम् । कण्ठासक्तं पुनः कृत्वा गाढालिङ्गनमाचरेत् । विधृत्य हस्तौ जघनोपविष्टः शीत्कृत्य वक्त्रे च मुदा प्रचुम्ब्य । भगे च लिङ्गं स्तनमर्दनञ्च दत्त्वापि कृत्वा प्ररमेच्च कामी । केतकपत्रनखं कृत्वा नखांस्त्रीन् पञ्च चैव वा । पृष्ठे च जघने योनौ दत्त्वा कामी रमेत् स्त्रियम् । नखरोमाङ्कितं कृत्वा दन्तेनाधरपीडनम् । ग्रीवामाकृष्य यत्नेन योनौ लिङ्गेन ताडनम् । लिङ्गप्रवेशनं कृत्वा धृत्वा गाढप्रयोगतः । पार्श्वद्वयेन सम्पीड्य निष्ठुरं ताडयेद्भगम् । समालिङ्ग्य स्त्रियं गाढं स्तनयुग्मे च मर्दनम् । योनौ नाभौ च संमर्द्य निष्ठुरं लिङ्गताडनम् । केशं करेण संगृह्य दृढं सन्ताडयेद्भगम् । वदने चुम्बनं कृत्वा भगं हस्तेन मर्दयेत् । कुचं करेण संमर्द्य पीडयेदधरं दृढम् । रतेन पद्मबन्धेन पद्मिनीरतिमादिशेत् । शीत्कारं चुम्बनं पीडा गले हस्तौ च चुम्बनम् । कक्षे वक्षे स्तने हस्तं चित्रिणीरति-

कादिशेत्। स्त्रीपुंसयोस्तथान्योन्यं भगे लिङ्गे च चुम्बनम्। रमणन्तु तथा गाढ़ं शङ्खिनी रतिमादिशेत्। केशं करेण संगृह्य सुदृढ़ं गजवन्धनम्। भगं करेण सन्ताड्य हस्तिनीरतिमादिशेत्। कूर्मपृष्ठं गजस्कन्धं पद्मगन्धं सुगन्धि यत्। अलोमकं सुविस्तीर्णं पद्मैतद्ध भगमुत्तमम्। शीतलं निम्नमत्युच्चं गोजिह्वासदृशं परम्। इत्युक्तं कामशास्त्रज्ञैर्भगदोषचतुष्टयम्"। स्त्रीशुभाशुभलक्षणन्तु उपयमशब्दे १२७८पृष्ठादौ द्रष्टव्यम्।

**स्त्रीगवी** स्त्री० स्त्री चासौ गौश्च पचसमा०। (गाभि) रोहिणयास।

**स्त्रीचित्तहारिन्** पु० स्त्रियाश्चित्तं हरति हृ-णिनि। १शोभाञ्जने त्रिका०। २स्त्रीमनोहारके त्रि०।

**स्त्रीचिह्न** न० स्त्रिया असाधारणं चिह्नम्। १योनौ जटा०। २स्त्रिया असाधारणे चिह्ने स्तनादौ ३स्त्रीलक्षणे च।

**स्त्रीचोर** पु० स्त्रिया चोर इव। कामुके त्रिका०।

**स्त्रीजित** पु० स्त्रिया जितः जि-क्त। स्त्रीवश्ये। "स्त्रीजितस्यशमात्रेण सर्वं पुण्यं प्रणश्यति। न भूमौ पातकी पापात् पापिनां स्त्रीजितात् परः" ब्रह्मवै० ज० ४अ०। तस्य निन्दोक्ता।

**स्त्रीधन** न० ६त०। स्त्रीस्वत्वाश्रये द्रव्यमात्रे इति मिताक्षरादयः। "अध्यग्न्यध्यावाहनिकं भर्तृदायस्तथैव च। भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम्" नारदपरिगणिते स्त्रीस्वत्वाश्रये धने इति दायभागादयः। स्त्रीधनस्वरूपादिकं मिताक्षरामतानुसारेण वीरमि० निरूपितं यथा

"अथ स्त्रीधनविभागं वक्तुं तत्स्वरूपं तावन्निरूप्यते तत्र मनुः "अध्यग्न्यध्यावहनिकन्दत्तञ्च प्रीतिकर्मणि। भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतमिमि" षड्विधमितिन्यूनसंख्याव्यवच्छेदपरन्नाधिक्यनिरासाय। अत एव योगीश्वरेण "पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम्, इत्याद्यशब्द उपात्तः। विष्णुनापि षडधिकानि स्त्रीधनान्युक्तानि। स यथाह "पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम्। आधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयमिति स्त्रीधनम्" इति। नारदः "अध्यग्न्यध्यावाहनिकम्भर्तृदायस्तथैव च। भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतमिति"। षड्विधत्वं मानववदेव व्याख्येयम्। स्त्रीधनशब्दश्चायं यौगिकः स्त्रीस्वामिकन्धनमिति न तु पारिभाषिकः योगसम्भवे परिभाषाया अन्याय्यत्वात्। अत एव योगीश्वरेण रिक्थक्रयादिसाधारणस्वत्वोपायसंग्रहायाद्यपदं प्रयुक्तम्। ननु च क्वचित् स्त्रीधनत्वनिषेधोऽनुपपन्न एवं सति स्यात्। न हि स्त्रीस्वामिकत्वं तत्र निषेद्धुं शक्यते बाधात्। यथाह कात्यायनः "तत्र सोपधि यद्दत्तं यच्च योगवशेन वा। पित्रा भ्रात्राऽथ वा पत्या न तत् स्त्रीधनमुच्यते इति। उपधिश्छलवादादेवेदं मया दत्तं त्वया धार्य्यमलङ्कारादि नान्यदेति नियमस्तत्पूर्वकं दत्तं सोपधि योगवशेन दायादानां कन्यायै दत्तमिदन्तद्धनङ्कथं विभाज्यमिति। शिल्पप्राप्तं सख्यादिभ्यः प्रीत्या प्राप्तन्तदपि न स्त्रीधनमित्यप्याह स एव "प्राप्तं शिल्पैस्तु यत्किञ्चित् प्रीत्या चैव यदन्यतः। भर्त्तुः स्वाम्यन्तदा तत्र शेषन्तु स्त्रीधनं स्मृतम्" इति। पारिभाषिकत्वे भ्रात्रादिदत्तत्वेन प्राप्तं स्त्रीधनं प्रतिषिध्यते। तेनैतच्छिन्नमेव पित्रादिदत्तं शिल्पादिप्राप्तभिन्नं वा स्त्रीधनमिति परिभाष्यते इति चेत्। उच्यते। नात्र स्त्रीधनत्वनिषेधः। किन्तु तत्कार्य्य विभागादि निषेधः। अत एवोत्तरश्लोके तत्र भर्त्तुः स्वाम्यमित्युक्तम्। भर्त्तुस्तदिनियोगे स्वातन्त्र्यन्न स्त्रिया इत्यर्थः। प्रथमश्लोके तु स्त्रीस्वत्वनिषेधोऽपि सम्भवति उपधियोगपदयोरुपादानात्। तादृशदाने च स्वत्वाभावस्य प्रसिद्धत्वात्। "योगाधमनविक्रीतं योगदानप्रतिग्रहम्। यत्र वाप्युपधिम्पश्येत्तत्सर्वं विनिवर्त्तयेदिति" मनुवचनात् "भार्य्या पुत्त्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमित्यपि वचनम्भार्य्याविषये शिल्पादिप्राप्तपरमेव एकमूलकल्पनालाघवात्। अध्यग्न्यादिस्वरूपञ्चिरूपितं कात्यायनेन "विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ। तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम्। यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्। अध्यावाहनिकन्नाम स्त्रीधनन्तदुदाहृतम्। प्रीत्या दत्तं तु यत्किञ्चिच्छ्वश्र्वा वा श्वशुरेण वा। पादवन्दनिकञ्चैव प्रीतिदत्तन्तदुच्यते। विवाहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया। अन्वाधेयन्तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा। गृहोपस्कारवाह्यानां दोह्याभरणकर्मिणाम्। मूल्यं लब्धन्तु यत्किञ्चिच्छुल्कं परिकीर्त्तितम्। ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा। भ्रातुः सकाशात् पित्रोर्वा लब्धं सौदायिकं स्मृतम्"। भर्त्तुः

सकाशादिति कल्पतर्वादौ पाठः । अध्यग्न्यादिशब्दास्तु योगरूढ़ास्तादृशस्त्रीधनादावेव प्रयोगात् । गृहोपस्कर-वाहादीनां यन्मूल्यं कन्यापणोपाधित्वेन वरादिभ्यः कन्या-भरणरूपेण गृह्यते तच्छुल्कमिति मदनरत्ने व्याख्या-तम् । मिताक्षरायां तु यद्गृहीत्वा कन्या दीयते तच्छुल्कमित्युक्तम् । उभयत्रापि पित्रादीनां कन्याया इदमित्युद्देशो विवक्षितः अन्यथा तत्स्वत्वाभावेन स्त्रीधनत्वव्यपदेशत्वानुपपत्तेः । जीमूतवाहनेन तु कार्म्मि-णामिति पठित्वा गृहादिकर्म्मिभिः शिल्पिभिस्तत्कर्म-करणे भर्त्रादिप्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छु-ल्कं तदेव मूल्यं प्रकृत्यर्थत्वादिति व्याख्यातम् । पुनश्चोक्तम् "यदानेतुं भर्तृगृहे शुल्कन्तत्परिकीर्त्ति-तमिति" व्यासोक्तं वा । भर्तृगृहगमनार्थमुत्कोचादि यद्दत्तं तच्छुल्कमित्यर्थ इति । तदुभयमपि स्त्री-स्वामिकं भवत्येव तस्या एव दत्तत्वादिति तत्र स्त्री-धनत्वव्यपदेशोऽन्यस्त्रीधनवत् सुगम एव । आधि-वेदनिकं स्त्र्यन्तरविवाहकाले पूर्व्वभार्य्यायै यद्दीयते । यदाह याज्ञवल्क्यः "अधिविन्नस्त्रियै दद्यादाधि-वेदनिकं समम् । न दत्तं स्त्रीधनं यस्यै दत्ते त्वर्द्धं प्रकल्पयेत्" इति । पित्रादिभिर्जीवनाद्यर्थं स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः "पितृमातृपति-भ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै । यथाशक्त्याद्विसा-हस्राद्दातव्यं स्थावरादृते" । स्थावरेतरधनं यथाशक्ति आकार्षापणसहस्रद्वयपर्य्यन्तं देयमित्यर्थः । व्यासोऽपि "द्विसहस्रः परो दायः स्त्रियै देयो धनस्य तु" । आद्वि-सहस्रादिति कात्यायनेन, पर इति च व्यासेनोक्ते-रितोऽधिकमिति धनिनापि न स्त्रीभ्यो देयमिति दर्शितम् । अयञ्च नियमः प्रतिवत्सरमसकृद्दाने नैकका-लानेकवत्सरेषु जीवनार्थं दीयमानमितोऽधिकमपि अर्पति चेन्न दोषः । जीवनार्थत्वाद्दानस्य यावज्जीवञ्च द्विसाहस्रमात्रेण तन्निर्व्वाहासम्भवात् । स्त्रीधनेऽपि भर्त्तुरनुमतिमन्तरेण स्त्रीणाञ्च स्वातन्त्र्यमित्याह मनुः "न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यगात् । स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया" इति निर्हारो व्ययः । क्वचित्तु स्त्रीधने तासां स्वातन्त्र्य-मस्ति यदाह सौदायिकस्वरूपमुक्त्वा कात्यायनः "सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते । यस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् । सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम् । विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि" । भर्त्तृदत्ते तु स्थाव-रेतरत्रैव स्वातन्त्र्यमित्याह नारदः "भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत् । सा यथा काम-मश्नीयाद्दद्याद्वा स्थावरादृते" । स्थावरे भर्त्तृदत्ते स्त्रिया निवासाद्युपभोगमात्रं न दानविक्रयादिकमित्यर्थः । अपुत्रा शयनं भर्त्तुरित्यादि कात्यायनवचोऽपि भर्तृ-दत्तस्थावरविषयमेव नारदैकवाक्यतयेति केचित् । अस्माभिस्तु पत्नी दुहितर इति व्याख्यानावसरेऽस्य विषयः प्रपञ्चितः । पुरुषाणामपि कस्मिन्नपि स्त्रीधने न स्वातन्त्र्यं स्वाम्याभावादित्याह कात्यायनः "न भर्त्ता नैव च सुतो न पिता भ्रातरो न च । आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः । यदि त्वेकतरो-ऽप्येषां स्त्रीधनं भक्षयेद्बलात् । सवृद्धिकं स दाप्यः स्याद्दण्डञ्चैव समाप्नुयात् । तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्व्वकम् । मूल्यमेव तदा दाप्यो यदा स धनवान् भवेत् । अथ चेत् स द्विभार्य्यः स्यान्न च तां भजते पुनः । प्रीत्या विसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात् । ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः । तत्र स्वमा-ददीत स्त्री विभागं रिक्थिनान्तथा" । स्त्रिया धनं गृहीत्वा यद्यपरभार्य्यया सह वसत्येनाञ्चावमन्यते तदा गृहीतं तद्धनं राज्ञा बलाद्दाप्यः । भक्ताच्छा-दननिवासान् यदि भर्त्ता न ददाति तदा तेऽपि स्त्रिया बलादुपाहर्त्तव्यानि धनं वा ग्राह्यमिति श्लोकद्वयार्थः । इदमपि तस्या दोषराहित्ये बोध्यं दुष्टा पुनः किमपि स्त्रीधनं न लभते इत्याह स एव "अपकारक्रियायुक्ता निर्लज्जा चार्थना-शिका । व्यभिचाररता या च स्त्रीधनं न तु सा-र्हति" । नार्हतीत्यनेन तया लब्धमप्याच्छिद्य ग्राह्य-मिति सूचितम् । अपकारक्रियायुक्ता सदा भर्त्तृप्रतिकूला-चरणपरा "निर्म्मर्य्यादार्थनाशिका" इत्यपि पाठः । देवलः "वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् । भोक्त्री तत् स्वयमेवेदं पतिर्नार्हत्यनापदि । वृथा मोक्षे च भोगे च स्त्रियै दद्यात् सवृद्धिकम्" इति । वृत्ति-र्वर्त्तनार्थं पित्रादिना दत्तमिति स्मृतिचन्द्रिकायाम् । मदनरत्ने तु वृत्तिरिति पठितम् । वृत्तिर्ज्जीवनार्थं पित्रादिभिर्दत्तमिति व्याख्यातञ्च । लाभो गौर्य्यादि-प्रीत्यर्थं यल्लभ्यते कुतश्चित् । वृथा आपदमन्तरेण ।

भोजनस्य गोदानमिति यावत्। अननुज्ञातत्यागभोगविषयमेतत्। तदनुज्ञया त्वनापद्यपि न दोषः “स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः। भर्तृव्युदासस्य पतिर्नार्हतीत्यनेनाभिधानात्। भर्तृव्युदासे सतो वहिरङ्गानां भ्रात्रादीनां व्युदासस्यापि दण्डापूपिकया सिद्धत्वात्। अनापदीत्यभिधानादापदि न दोषः। अतएव “पुत्रार्त्तिहरणे चापि स्त्रीधनं भोक्तुमर्हतीति” तस्यैव वाक्यशेषः। पतिरित्यनुषङ्गः। पुत्रग्रहणं कुटुम्बोपलक्षकं तस्यार्त्तिर्भक्ष्याद्यभावनिमित्ता पीड़ा तस्या हरणे। चशब्दादन्यस्मिन्नपि धनाभावनिमित्ते सङ्कटे स्त्रीधनमननुज्ञातमपि पतिस्त्यक्तुं भोक्तुमर्हतीत्यर्थः। ननु परधने त्यागभोगयोः स्वाम्यनुज्ञया विना कथमर्हता वाधिताऽनेन बोध्यते। अनुज्ञायान्त्वनापद्यपि न विरोधः। उच्यते। वचनवलात्तादृशविषये व्यये स्वत्वमेव तस्य तत्रेत्यदोषः। अतएव योगीश्वरोऽपि “दुर्भिक्षे धर्मकार्य्ये च व्याधौ सम्प्रतिरोधके। गृहीतं स्त्रीधनं भर्त्ता नाकामो दातुमर्हति”। धर्मकार्य्ये आवश्यके नित्ये नैमित्तिके च सम्प्रतिरोधके दण्डाद्यर्थं राज्ञावरोधे कृते। वाचस्पतिस्तु सम्प्रतिरोधक इति व्याधिविशेषणं कार्य्यानुष्ठानबाधके इति च तदर्थं इत्याह। नाकामो दातुमर्हतीत्यपि दारिद्र्यादिकृतदानासामर्थ्ये दुर्भिक्षादिगृहीतमप्यवश्यं देयमेतावतैव वचनोपपत्तौ सामर्थ्येऽप्यदानमिच्छयेत्यस्य कल्पयितुमनर्हत्वात्। पतिग्रहणादापद्यपि पत्युरेव पत्नीधनग्रहणाधिकारः प्रतिदानञ्चेच्छया नान्यस्येति ज्ञेयम्। भर्त्रा दातुं प्रतिश्रुतं भार्य्यायै तस्मिन् मृते पुत्रादिभिस्तस्यै देयमित्यप्याह स एव “भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैरिति”। सुतग्रहणं पौत्रप्रपौत्रयोरुपलक्षणमृणवदित्यभिधानात्। अनेन स्त्रीधने जीवन्त्यान्तस्यां सुतानां जन्मना स्वत्वेऽपि नास्ति विभाग इति गम्यते। एवं स्त्रीधनमुक्तम्”। दायभागमतं पारिभाषिकपरत्वपक्ष एव। अनयोर्युक्तायुक्तत्वं सुधीभिर्भाव्यम्। उत्तराधिकारिशब्दे ११०१ पृ० च तद्विभागो दृश्यः।

**स्त्रीधव** पु० स्त्रियं धुनाति धु—अच्। पुरुषे जटा०।

**स्त्रीधर्म्म** पु० ६त०। ऋतौ नारीकुसुमविकाशे रजसि हेमच०

**स्त्रीधर्म्मिणी** स्त्री स्त्रीधर्मोऽस्त्यस्याः इनि। ऋतुमत्यां स्त्रियाम् अमरः।

**स्त्रीपण्योपजीविन्** पु० स्त्रीरूपेण पण्येन जीवति जीव-णिनि। धनं गृहीत्वा सम्भोगार्थमन्यस्मै स्त्रियं दत्त्वा तल्लब्धधनोपजीविनि।

**स्त्रीपुंधर्म्म** पु०स्त्रियाः पुंसश्च धर्मः तमधिकृत्य व्यवहारो वा। स्त्रीपुंसयोः यथाशास्त्राचाररूपे धर्मे तद्विषयके अष्टादशसु विवादपदेषु मध्ये विवादपदभेदे स्त्रीपुंसयोगोऽप्यत्र। वीर० तत् न्यरूपि यथा “तत्स्वरूपमाह नारदः “विवाहादिविधिः स्त्रीणां यत्र पुंसाञ्च कीर्त्त्यते। स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते” इति। विवाहादिशब्देन स्त्रीपुंधर्मा गृह्यन्ते। अतएव मनुर्व्यवहारपदोद्देशकाले स्त्रीपुंधर्मविभागस्योल्लेखात् प्रतिज्ञापूर्वकं तेषां निरूपणं चकार “पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः। संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान्” इत्यादिना संयोगे अन्योन्यसन्निधाने विप्रयोगे देशतः कालतो वा व्यवधाने। शाश्वतान्नित्यान् अवश्यानुष्ठेयानिति यावत्। के ते धर्मा इत्याकाङ्क्षायामाह स एव “अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्। विषयेषु च सज्जन्त्यः संस्थाप्या ह्यात्मनो वशे” इत्यादि। पुरुषैः भर्त्तृपुरुषैः। विषये दण्डहेतुभूतचाञ्चल्यादिविषये। नारदोऽपि “स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः। अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत्” इति। अतोऽन्यैरपि स्वस्त्रीणामस्वातन्त्र्यं यथा भवति तथा कर्त्तव्यमित्याशयः। पुरुषेण स्वस्त्री व्यभिचारादवश्यं रक्षणीया। तथा च हारीतः “एकव्रतस्यैकत्वभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति जीवति जारजः कुण्डो मृते भर्त्तरि गोलकस्तस्माद्रेतोपाघाताज्जायां रक्षेज्जायानाशे कुलनाशः कुलनाशे तन्तुनाशस्तन्तुनाशे देवपितृयज्ञनाशो देवपितृयज्ञनाशे आत्मनाशः आत्मनाशे सर्वनाशः” इति। एकव्रतस्यैकत्वभावात् स्त्रीणां एकभर्त्तृत्वेति नियमनाशात्। परेन्द्रियोपहतत्वात् परस्मिन् पुंसि इन्द्रियस्य मनसो रागादिना उपहतत्वात्। कुलसङ्करकारिण्यस्तज्जातिस्वभावानुगत फलोत्पादनेन कुलसाङ्कर्य्यकारिण्यः। अतएव शङ्खलिखितौ “यस्मिन् भावोऽर्पितः स्त्रीणामात्मैवे तादृशं तस्तुमनयन्तीति”। तन्तुः पुत्रादिसन्ततिः। मनुरपि “सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः। द्वयोर्हि

कुलयोः शोकमावहेयुररक्षिताः । इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम् । यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्बला अपि । स्वां प्रसूतिं चरित्रञ्च कुलमात्मानमेव च । स्वधर्म्मं हि प्रयत्नेन जायां रक्षन् हि रक्षितः” इति । द्वयोः कुलयोः भर्तृपितृकुलयोः । अनेन कुलद्वयस्थैरपि रक्ष्या इति शोककथनमुखेन दर्शितम् । अतएव बृहस्पतिः “स्वकेभ्योऽपि प्रसङ्गेभ्यो निवार्य्या स्त्री स्वबन्धुभिः । श्वश्र्वादिभिः पालनीया गुरुस्त्रीभिर्दिवानिशम्” । मनुरपि “कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन् पतिः । मृते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता” इति । काले कन्यादानयोग्ये काले । वाच्यो निन्द्यः । अनुपयन् अनभिगच्छन् । स एव “पिता रक्षति कौमारे भर्त्ता रक्षति यौवने । पुत्रस्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति” । याज्ञवल्क्योऽपि “रक्षेत् कन्यां पिता, विन्नां पतिः, पुत्रस्तु वार्द्धके । अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित् स्त्रियाः” इति । विन्ना विवाहिता । पतिपुत्रविहीनायास्तु रक्षणं पतिपक्षान्तर्गतेन प्रत्यासन्नेन कार्य्यम् । तथा च नारदः “मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियः । विनियोगात्मरक्षासु भरणेषु च ईश्वरः । परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये । तत्सपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियः” । पितृपक्षस्याप्यभावे स एवाह “पक्षद्वयावसाने तु राजा भर्त्ता स्मृतः स्त्रियः । स तस्या भरणं कुर्य्यान्निगृह्णीयात् पथश्च्युताम्” इति । विनियोगः कर्म्मणि नियोजनम् । भर्त्ता पोषकः स्त्रीस्वभावं दर्शयति दक्षः “जलौकावत् स्त्रियः सर्व्वा भूषणाच्छादनाशनैः । सुहृतापि कृता नित्यं पुरुषं ह्यपकर्षति । जलौका रक्तमादत्ते केवलं सा तपस्विनी । इतरा तु धनं चित्तं मांसं वीर्य्यं बलं सुखम् । साशङ्का बालभावे तु यौवनेऽभिमुखी भवेत् । तृणवन्मन्यते नारी वृद्धभावे स्वकम्पतिम् । स्वकार्य्ये वर्त्तमाना या स्नेहाच्च निवारिता । अपथ्या तु भवेत् पश्चात् यथा व्याधिप्रपीडितः” इति । सुहिता तृप्ता कृतापीत्यन्वयः । अपकर्षति सततमाज्ञाभावं करोति स्वकार्य्ये स्वेच्छायाम् । अपथ्या अत्यन्ताहितहेतुभूता । मनुरपि “नैता रूपं परीक्षन्ते नासां वयसि संस्थितिः । सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते । पौंश्चल्याच्चलचित्तत्वात् नैःस्नेह्याच्च स्वभावतः । रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते । शय्यासनमलङ्कारं कामं क्रोधमनार्जवम् । द्रोहभावं कुचर्य्याञ्च स्त्रीभ्यो मनुरकल्पयत् । नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मो व्यवस्थितः । निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः । तथा च श्रुतयो बह्व्यो निगीता निगमेष्वपि । स्वालक्षण्यपरीक्षार्थन्तासां शृणुत निष्कृतीः । यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता । तन्मे रेतः पिता वृङ्क्तामित्यस्यैतन्निदर्शनम् । ध्यायत्यनिष्टं यत्किञ्चित् पाणिग्राहस्य चेतसा । तस्यैष व्यभिचारस्य निह्नवः सम्यगुच्यते । एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम् । परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति” इति । निरिन्द्रिया निर्वीर्य्या धैर्य्यप्रज्ञादिरहिता इति यावत् । स्त्रियोऽनृतमिति प्रायशोऽनृतवदनशीलत्वादुच्यन्ते । श्रुतयः श्रुतिवाक्यानि । निगमेषु वेदेषु स्त्रीलक्षणं स्वरूपं तासां श्रुतीनाम्मध्ये या निष्कृतिरूपा व्यभिचारप्रायश्चित्तरूपास्ताः श्रुतीः शृणुत स्त्रीस्वभावज्ञानार्थमित्यर्थः । महाभारतेऽपि “कुलीना रूपवत्यश्च नाथवत्यश्च योषितः । मर्य्यादासु न तिष्ठन्ति स दोषः स्त्रीषु नारद ! । अनर्थित्वान्मनुष्याणां भयात् परिजनस्य च । मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्तृषु । यौवने वर्त्तमानानां मृष्टाभरणवाससाम् । नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः । यदि पुंसामतिर्न स्यात् ! कथञ्चिन्नोपपद्यते । अन्योन्यञ्च प्रवर्त्तन्ते न च तिष्ठन्ति भर्तृषु । अलाभात् पुरुषाणाञ्च भयात् परिजनस्य च । बधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः । नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः । नान्तकः सर्व्वभूतानां न पुंसां वामलोचना । काम्यानामपि दातारं दातारं मानसान्त्वयोः । रक्षितारञ्च मुञ्चन्ति भर्त्तारं यत्नतः स्त्रियः” इति । श्रीरामायणेऽपि “नैवाङ्गनानामप्रियो नापि द्वेष्योऽस्ति कश्चन । सर्व्वमेवावलम्बन्ते लता गहनजा इवेति” । अथ रक्षणप्रकारः । तत्र मनुः “न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् । एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम्” इति । प्रसह्य आक्रम्य अवरुध्येति यावत् । तदवरोधेन शरीरव्यभिचाराद्रक्षणं शक्यत्वेऽपि मानसव्यभिचाराद्रक्षणमशक्यमित्याशयेन बलेन न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुमित्युक्तम् । न च मानसव्यभिचाराद्रक्षणमनर्थकमन्यजन्यत्वाभावेन प्रजाविशुद्धिविघाताभावादिति वक्तव्यम् । यत आह स

एव "यादृशं भजते स्त्री हि सुतं सूते तथाविधम्। तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियो रक्षेत् प्रयत्नतः" इति। यादृशं पुरुषमृतुकाले स्त्री मनसा भजते तत्समानशीलं पुत्रं जनयतीति पूर्वार्द्धार्थः। अतएवाहतुः शङ्खलिखितौ "यस्मिन् भावोऽर्पितः स्त्रीणामार्त्तवे तच्छीलं जनयन्तीति"। मानसव्यभिचारादपि स्त्रियं रक्षेदिति शेषः। तथा च मनुना तस्मादित्यादिनोत्तरार्द्धेनायमेवार्थो दर्शितः। परिरक्षणोपायानाह मनुरेव "अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्। शौचे धर्मे च पक्त्यां च पारिणाह्यस्य चेक्षणे" इति। अर्थस्य संग्रहे स्वेन समानीतार्थसंविधाने। व्यये स्वेनोक्तव्यये। शौचे गृहादिशुद्धिकरसंमार्जनोपलेपनादौ। धर्मे अग्निहोत्राद्यनुकूललौकिकव्यापारे। पक्त्यां पाकव्यापारे। पारिणाह्यं पीठादि गृहोपकरणं तस्य ईक्षणे विचारणे। निरन्तरगृहव्यापारनियोजनात् पुरुषान्तरचिन्तारहित्यं यथा भवति भार्यायाः तथा कुर्यादिति तात्पर्यार्थः। वृहस्पतिरपि "आयव्ययेऽथ संस्कारे गृहोपस्कररक्षणे। शौचाग्निकार्य्ये संयोज्याः स्त्रीणां शुद्धिरियं स्मृता" इति। एवंविधव्यापारासक्तचित्ततया साध्व्य इति व्यपदिश्यन्त इत्याह मनुः "आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः" इति। आत्मना गृहव्यापारासक्तेनान्तःकरणेन सुरक्षिताः साध्व्यः। आप्तपुरुषरक्षितास्तु स्त्रियो न सम्यग्रक्षिता इत्याह स एव "अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः" इति। आप्तकारिभिः पुरुषैः गृहे रुद्धा इत्यन्वयः। आप्ताश्च ते कारिणश्चाप्तकारिणः। अरक्षिताः सम्यग्रक्षाविहीना इत्यर्थः। भर्त्तुर्द्धर्मनिष्ठत्वमपि स्त्रीणां रक्षणोपाय इति दर्शयितुं स एवाह "यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि। तादृग्गुणा सा भवति समुद्रेणेव निम्नगा। अक्षमाला वसिष्ठेन संयुक्ताऽधमयोनिजा। शारङ्गी मन्दपालेन जगामाभ्यर्हणीयताम्" इति। भार्याया भरणमप्यावश्यकमित्याह स एव "देवदत्तां पतिर्भार्यां विन्दते नेच्छयात्मनः। तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन्"। देवैर्दत्ता देवदत्ता दैववशादायातेति यावत्। तां भार्यां स्वयंवरे पतिर्विन्दते। तत्र स्वव्यापाराभावाद्देवदत्तामित्यनेन विवाहलक्षणस्य स्त्रीपुंसयोः सम्बन्धस्य न स्वाधीनत्वं किन्तर्हि दैवकृतत्वमिति दर्शितम्। देवदत्तत्वञ्च स्त्रीणाम् "सोमोऽददद्गन्धर्वाय गन्धर्वो ददद्ग्नये। रयिञ्च पुत्रांश्चाददग्निर्मह्यमथो इमाम्" इत्यादिभ्यः स्मृतिवाक्येभ्योऽवगम्यते। तेन देवैर्दत्ताया अभरणेन दातॄणां देवानां द्रोह आपद्यत इत्यर्थवाद इत्युक्तं मदनरत्ने। न च साध्वीमित्यस्य पतिव्रतामित्यर्थपरत्वेन व्यभिचारिण्या भरणमनावश्यकमिति वक्तव्यम्। तस्या अपि कदन्नादिनाऽवश्यभरणीयत्वात्। तथा च नारदः "व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च। कदन्नञ्च कुवासश्च कर्म चावस्करोज्झनम्" इति। स्त्रिया रत्यर्थं व्यभिचारे जाते मुण्डनमधःशयनञ्च कारयेत्। कदन्नं कुवासश्च भरणार्थं दद्यात्। अमेध्यशोधनरूपं कर्म कारयेदित्यर्थः। दोषरहिताया भार्यायाः परित्यागिनं प्रत्याह नारदः "अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम्। त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा" इति। विष्णुरपि "निर्दोषां परित्यजन् पत्नीं" चौरवच्छास्य इत्यनुषङ्गः। निर्दोषां त्यागहेतुभूतदोषरहिताम्। दण्डेन स्थापयितुमशक्ये त्वाह योगीश्वरः "आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम्। त्यजन् दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियः" इति। तृतीयांशं स्वधनतृतीयांशम्। राज्ञा भार्याया दाप्यः। अल्पधनः भरणमात्रपर्य्याप्तं धनं दाप्य इत्यर्थः"।

**स्त्रीपुंस** पु० द्वि० स्त्री च पुमांश्च अच्समा०। मिलितयोः [स्त्रीपुरुषयोः।

**स्त्रीपुंसलक्षणा** स्त्री स्त्रीपुंसयोर्लक्षणमस्याम्। स्तनश्मश्रुप्रभृतिस्त्रीपुरुषचिह्नधारिण्यां स्त्रियाम् पोटायाम् अमरः

**स्त्रीप्रिय** पु० ६त०। १आम्रवृक्षे त्रिका०। २नारीप्रियमात्रे त्रि०

**स्त्रीमुखप** पु० स्त्रीमुखं पाति पा—क। दोहलमशोके राजनि०।

**स्त्रीरोग** पु० ६त०। स्त्रीणां रोगे योनिरोगादौ सुश्रुतः।

**स्त्रीलिङ्ग** पु० स्त्रिया इव लिङ्गं तत्कार्य्यं यस्य। स्त्रीलिङ्गविहितव्याकरणोक्तसंस्कारयुक्ते १शब्दभेदे। ६त० स्त्री२चिह्ने स्तनादौ न०।

**स्त्रीवश** पु० ६त०। स्त्रीवशीभूते।

**स्त्रीविधेय** पु० ६त०। स्त्रीवशीभूते।

**स्त्रीसंग्रहण** न० स्त्रियाः संग्रहणं यत्र। परस्त्रीहरणरूपे विवादपदभेदे। तत्स्वरूपादिकं वीरमि० दर्शितं यथा "अथ स्त्रीसंग्रहणाख्यं व्यवहारपदम्। तस्य त्रैविध्यमाह वृहस्पतिः ""पापमूलं संग्रहणं त्रिप्रकारं

निवेधत । बलोपधिकृते द्वे तु तृतीयमनुरागजम्” इति । एतेषां स्वरूपं दर्शयति स एव “अनिच्छन्त्या यत् क्रियते सुप्तोन्मत्तप्रमत्तया । विलपन्त्या वा रहसि बलात्कारकृतन्तु तत् । छद्मना गृहमानीय दत्त्वा वा मदकारणम् । संयोगः क्रियते यत्र तदूपधिकृतं विदुः । अन्योन्यञ्चानुरागेण दूतीसंप्रेषणेन वा । कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम्” इति । अनुरागजसंग्रहस्य त्रिविधत्वं दर्शयति स एव “तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम्” इति । व्यासोऽपि “संग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा । उत्तमश्चेति शास्त्रेषु लक्षणं च पृथक् पृथक्” इति । एतेषां स्वरूपमाह तत्रैव बृहस्पती “कटाक्षावेक्षणं हास्यं दूतीसंप्रेषणं तथा । स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः । प्रेषणं गन्धमाल्यानां फलधूपान्नवाससाम् । सम्भाषणञ्च रहसि मध्यमं संग्रहं विदुः । एकशय्यासनं क्रीड़ा चुम्बनालिङ्गनं तथा । एतत् संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः” इति । स्त्रीसंग्रहणस्य ज्ञानोपायमाह याज्ञवल्क्यः “पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया । सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा” इति । परभार्य्यया सह केशाकेशि क्रीड़नेन सद्यः अभिनवैः कामजैः करजदशनादिक्षतप्रणादिलिङ्गैर्द्वयोः सम्प्रतिपत्त्यावयं स्त्रीसंग्रहणवान् इति प्रतिपत्तव्य इत्यर्थः । उपायान्तरमाह स एव “नीवीस्तनप्रावरणसक्थिकेशावमर्षणम् । अदेशकालसम्भाषः सहैकस्थानमेव च” इति । कुर्वाण इति शेषः । सक्थि ऊरुः । मनुरपि “स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत् तया । परस्परस्यानुमते सर्व्वं संग्रहणं स्मृतम्” । यस्तु दर्पादिना मयेयं भुक्तेति वदति सोऽपि तथाविधत्वेन ग्राह्य इत्याहतुर्मनुनारदौ “दर्पाद्वा यदि वा मोहात् श्लाघया वा स्वयं वदेत् । पूर्व्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्” इति । बलात्कारकृतस्य स्त्रीसंग्रहणस्य साहसान्तर्भूतत्वेन तत्रैव दर्शितत्वादुपधिकृते दण्डमाह बृहस्पतिः “दर्पाद्वा कामयेद्यस्तु तस्य सर्व्वहरो दमः । अङ्कयित्वा भगाङ्केन पुरान्निर्व्वासयेत्ततः” इति । सर्व्वहरः सर्व्वस्वहरः एतत् सजातीयविषयम् । हीनोत्कृष्टागमने तु क्रमेणार्द्धं धनं सर्व्वस्वहरणरूपो बधसहितसर्व्वस्वहरणरूपो वा दण्डोऽवगन्तव्यः । “दमानेयः समायामित्ति” साहसादनिरूपण-

दर्शितवचनात् । तत्र वचने पुरुषस्यापकर्षाभावे युक्तो दण्डो न स्त्रिया इति नोक्तस्तस्याः दण्डः, तेन साहस स्त्रीसंग्रहणवत् प्रकृतेऽपि सजातीयापभुक्तायाः संव्यवहार्य्यायाः प्रायश्चित्ताचरणानन्तरं पुनरपि तेनोपभुक्ताया इति ज्ञातव्यमित्युक्तं मदनरत्ने । अनुरागजत्रिविधसंग्रहणे दण्डमाह स एव “त्रयाणामपि चैतेषां प्रथमो मध्यमोत्तमौ । विनयः कल्पनीयः स्यादधिकोद्विगुणाधिकः” इति । अधिकः प्रथमसाहसाद्द्विगुणोऽधिकः । सम्भोगे दण्डमाह याज्ञवल्क्यः “स्वजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः । प्रातिलोम्ये बधः पुंसां नार्य्याः कर्णादिकर्त्तनम्” इति । चतुर्णामपि वर्णानां बलात्कारेण सजातीयपरभार्य्यागमने साशीतिपणसहस्रो दण्डः । यदा त्वानुलोम्येन हीनजातीयागमनं तदा मध्यममाहसः, उत्कृष्टजातीयागमने गन्तुर्बधः । तस्याः कर्णादिकर्त्तनमित्यर्थः । एतच्चानुरागजग्रहणविषयं स्त्रिया अपि दण्डाभिधानात् । बलात्कारोपधिकृतयोस्तु स्त्रिया अनपराधित्वेन दण्डाभावात् । अस्मादेव प्रातिलोम्येन गमने पुरुषस्य बधं विधाय स्त्रियास्तदर्द्धतुल्यकर्णनासादिकर्त्तनविधानात् सजातीयागमने पुरुषस्य यावुक्तावुत्तममध्यमसाहसौ दण्डौ तदर्द्धं स्त्रियादण्ड इति सूचितम् । अतएव कात्यायनः “सर्व्वेषु चापराधेषु पुंसो हर्थदमस्तथा । तदर्द्धं योषितो दद्युर्बधे पुंसोऽङ्गकर्त्तनम्” । इति । स्त्रिया इति शेषः । यदा पुनः सवर्णामगुप्तां आनुलोम्येन गुप्तां वा व्रजति तदा विशेषमाह मनुः “सहस्रं ब्राह्मणो दण्ड्योऽगुप्तां विप्रां बलाद्व्रजन् । शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः । सहस्रं ब्राह्मणो दण्ड्यं दाप्यो गुप्ते तु ते व्रजन् । शूद्रायां क्षत्रियविशोः सहस्रन्तु भवेद्दमः” इति । ते क्षत्रियवैश्यौ । एतच्च गुरुसखिभार्य्यादिव्यतिरिक्तविषयम् । तत्र दण्डान्तरविधानात् । तदाह नारदः “माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा । पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा । दुहिता चार्य्यभार्य्या च सगोत्रा शरणागता । राज्ञी प्रव्रजिता धात्री साध्वी वर्णोत्तमा च या । शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते” इति । यत्तु प्रातिलोम्येन गमने क्षत्रियादेः पुरुषस्य बध इत्युक्तं योगीश्वरवचने । तदगुप्ताविषयमन्यथा-ऽर्थदण्डः । तथा च मनुः “उभावपि हि तावेव ब्रा-

ब्राह्मण्या गुप्तया सह । विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना । ब्राह्मणीं यद्यगुप्तान्तु सेवेतां वैश्यपार्थिवौ । वैश्यम्पञ्चशतं कुर्य्यात् क्षत्रियन्तु सहस्रिणम्” इति । पञ्चशतस्य पणशतपञ्चकदण्डभाजमित्यर्थः । एवं सहस्रिणमित्यत्रापि । क्षत्रियस्य गुप्तवैश्यागमने वैश्यस्य च गुप्तक्षत्रियागमने क्रमेण पणसहस्रपणशतपञ्चकं तयोर्दण्ड इत्याह स एव “वैश्यश्चेत् क्षत्रियाङ्गुप्तां वैश्यां वा क्षत्रियो व्रजेत् । यो ब्राह्मण्यामगुप्तायान्तावुभौ दण्डमर्हतः” इति । शूद्रस्यागुप्तोत्कृष्टस्त्रीगमने लिङ्गच्छेदनसर्वस्वापहरणे गुप्तागमने तु बधसर्वस्वापहारौ । तथा च स एव “शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमाचरन् । अगुप्तमङ्गसर्वस्वो गुप्तं सर्वेण हीयते” इति । अयञ्च बधाद्युपदेशः प्रजापालनाधिकाराद्राज्ञ एव न द्विजातिमात्रस्य । “ब्राह्मणः परीक्षार्थमपि शस्त्रं नाददीतेति” शस्त्रग्रहणस्य निषिद्धत्वात् । यदा तु राज्ञो निवेदने कालविलम्बेन कार्य्यातिपातस्तदा द्विजातिमात्रस्यापि शस्त्रग्रहणेऽधिकारोऽस्त्येव “शस्त्रं द्विजातिभिर्ग्राह्यं धर्म्मो यत्रोपरुध्यते । नाततायिबधे दोषो हन्तुर्भवति कश्चन । प्रच्छन्नं वा प्रकाशं वा मन्युस्तं मन्युमृच्छति” इति शस्त्रग्रहणाभ्यनुज्ञानात् । परस्त्रिया सह सम्भाषणकर्त्तुर्दण्डमाह मनुः “परस्य पत्न्या पुरुषः संभाषां योजयेत् सह । पूर्व्वमाक्षारितो दोषैः प्राप्नुयात् पूर्व्वसाहसम्” इति । आक्षारितः अभिशस्तः । दोषैः नानास्त्र्युपभोगवाञ्छाभिः । पापबुद्ध्या यः सम्भाषणं करोति तद्विषयमेतत् । अतएव “यस्त्वनाक्षारितः पूर्व्वमभिभाषेत कारणात् । न दोषं प्राप्नुयात् किञ्चिन्न हि तस्य व्यतिक्रमः” इति । मनुवचनस्य त्वपूर्व्वसाहसमध्यमसाहसयोरुत्कृष्टसजातीयासम्भाषणादिविषयत्वेन व्यवस्था परिकल्पनीया । परपुरुषेण सह पित्रादिभिर्निषिद्धं सम्भाषणं या करोति सा पणशतं दण्ड्या परस्त्रिया सह पित्रादिभिर्निषिद्धसम्भाषणं यः पुरुषः करोति पणशतद्वयं दण्डनीयः । द्वयोरपि निषिद्धपरस्परसम्भाषणादि कुर्व्वतोः सम्भोगे यो दण्डः स एव दण्ड इत्याह याज्ञवल्क्यः “स्त्री निषेधे शतं दद्याद्द्विशतन्तु दमं पुमान् । प्रतिषेधे तयोर्दण्डो यथा सङ्ग्रहणे तथा” इति । निषिध्यत इति निषेधः कर्म्मणि घञ् । चारणादिस्त्रीव्यतिरिक्तविषयमेतत् “नैष चारणदारेषु विधिर्नात्मोपजीविषु । सज्जयन्ति हि ते नारीर्निगूढाश्चारयन्ति च” इति मनुस्मरणात् नटाः आत्मोपजीविनः वेशोपजीविनः । एतेषां दारेषु एष विधिर्न सम्भाषणादिनिमित्तकदण्डविधिर्न । परनरे नारीः स्वभार्य्याः सज्जयन्ति पुरुषान्तरे संयोजन्ति प्रच्छन्नीकृत्य चारयन्ति वेत्यर्थः । साधारणस्त्रीगमने दण्डमाह याज्ञवल्क्यः “अवरुद्धासु दासीषु भुजिष्यासु तथैव च । गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकन्दमम्” इति । स्वामिना या शुश्रूषार्थं गृहे एव स्थातव्यमित्येवं पुरुषान्तरोपभोगतो निरुद्धास्ताः अवरुद्धाः । पुरुषान्तरेणावरुध्य भुज्यमाना भुजिष्याः या दास्यो भुजिष्या अवरुद्धा वा तासु सर्व्वपुरुषगम्यास्वपि गमने पञ्चाशत्पणं दण्ड्यः तासामपरपरिगृहीतत्वेन परस्त्रीतुल्यत्वात् । चशब्दाद्वेश्यास्वैरिणीनामपि ग्रहणम् । तास्वपि सर्व्वपुरुषसाधारणीषु परपरिगृहीतासु गमनेऽयमेव दण्ड इति मन्तव्यम् । एतदेवाभिप्रेत्याह नारदोऽपि “स्वैरिण्यब्राह्मणी वेश्या दासी निष्कासिनी च या । गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥ आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् । गम्यास्वपि हि नोपेयास्ताः परपरिग्रहाः” इति । अब्राह्मणीति स्वैरिण्या विशेषणम् । स्वैरिणी स्वतन्त्रा पुंश्चली । निष्कासिनी कुटुम्बान्निर्गतेति मदनरत्ने । स्वाम्यनवरुद्धा दासीति विज्ञानेश्वरमाधवाचार्य्यप्रभृतयः । भुजिष्या सा स्वेति सम्बन्धः । व्यासोऽपि “परोपरुद्धागमने पञ्चाशत्पणिको दमः । प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः” इति । प्रसह्य वेतनदानं विना अस्वानवरुद्धासु वेश्यादिषु गम्यत्वाभिधानञ्च पापाभावप्रतिपादनार्थं किन्तु राजदण्डाभावप्रतिपादनार्थम् । “पशुवेश्यादिगमने प्राजापत्यं विधीयते” इत्यादिवचनैः प्रायश्चित्तस्मरणात् । बलात्कारेण अनवरुद्धदास्यभिगमने दण्डमाह याज्ञवल्क्यः “प्रसह्य दास्यभिगमे दण्डो दशपणः स्मृतः । बहूनां यद्यकामासौ चतुर्व्विंशतिकः पृथक्” इति । पुरुषसम्भोगजीविकासु दासीषु स्वैरिण्यादिषु शुल्कदानमन्तरेण बलात्कारेणाभिगच्छतो दशपणो दण्डः । यद्यनिच्छन्तीमेकाम्बलात्कारेण बहवो गच्छन्ति तर्हि प्रत्येकं चतुर्व्विंशतिपणात्मको दण्ड इत्यर्थः । यदि पुनः सा स्वेच्छया भाटकं गृहीत्वा प्रत्याख्याति तदा बलादुपगच्छतामपि बहूनामदोषः यदि

तस्या व्याध्याद्यभिभवो न भवेत्। अतएव नारदः "व्याधिता सभ्रमा व्यग्रा राजकर्मपरायणा। आमन्त्रिता चेन्नागच्छेद्दण्ड्या बड़वा स्मृता" इति। पारदार्य्यप्रसङ्गात् कन्यायामपि दण्डमाह याज्ञवल्क्यः "अलङ्कृतां हरन् कन्यामुत्तमं त्वन्यथाऽधमम्। दण्डं दद्यात् सवर्णासु प्रातिलोम्ये बधः स्मृतः" इति। अलङ्कृतां विवाहाभिमुखीं तां सवर्णां कन्यामपहरन् उत्तमसाहसं दण्डनीयः। तदनभिमुखीं हरन् प्रथमसाहसम्। उत्कृष्टवर्णजातां हरतः क्षत्रियादेर्बध इत्यर्थः। आनुलोम्येन सकामाहरणे न दण्डस्तथा च स एव "सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः" इति। कन्यादूषणे दण्डमाह स एव "दूषणे तु करच्छेद उत्तमायां बधः स्मृतः। शतं स्त्रीदूषणे दद्यात् द्वे तु मिथ्याभिशंसने" इति। "पशून् गच्छन् शतं दाप्यो हीनां स्त्रीं गाञ्च मध्यमम्" इति। यदाकामां कन्यामुत्खातादिना प्रसह्य दूषयति तदा करच्छेदः। यदा तु अङ्गुलिप्रक्षेपेण तामेव योनिक्षतां कुर्वन् दूषयति तदा विशेषमाह मनुः "अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः। तस्याशु कर्त्ये अङ्गुल्यौ दण्डञ्चार्हति षट्शतम्" इति। सकामदूषणेऽप्याह स एव "सकामां दूषयन् कन्यां नाङ्गुलिच्छेदमर्हति। द्विशतं तु दमं दाप्यः प्रसङ्गविनिवृत्तये" इति। यदा कन्या विदग्धा वा कन्यां दूषयति तदाप्याह स एव "कन्यैव कन्यां या कुर्य्यात्तस्यास्तु द्विशतो दमः। या तु कन्यां प्रकुर्य्यात् स्त्री सा सद्यो मौण्ड्यमर्हति। अङ्गुल्योरेव वा छेदः खरेणोद्वहनन्तथा" इति कुर्य्यात् योनिक्षतवतीमिति शेषः। यदा पुनरुत्कृष्टजातीयां कन्यां सकामामकामां वाभिगच्छति तदा हीनस्य क्षत्रियादेर्बधः। यदा सकामां सवर्णामभिगच्छति तदा शुल्कं गोमिथुनं तत्पित्रे दद्यात्। अनिच्छति तस्मिन् दण्डरूपेण राज्ञे दद्यात्। सवर्णामकामाङ्गच्छतो बध एव। तदाह मनुः "उत्तमां सेवमानस्तु जघन्योबधमर्हति। शुल्कं दद्यात् सेवमानः समामिच्छेत् पिता यदि। योऽकामां दूषयेत् कन्यां स सद्यो बधमर्हति। सकामां दूषयं स्तुल्यो न बधं प्राप्नुयान्नरः" इति। चाण्डाल्यादिगमने दण्डमाह याज्ञवल्क्यः "अन्त्याभिगमने त्वङ्क्य कुबन्धेन प्रवासयेत्। शूद्रस्तथान्त्य एव स्यादन्त्यस्यार्यागमे बधः" इति। अन्त्या चाण्डाली तद्गमने त्रैवर्णिकान् प्रायश्चित्तानभिमुखान् "सहस्रं त्वन्त्यजस्त्रियमिति" मनुवचनानुसारेण पणसहस्रं दण्डयित्वा कुत्सितवर्णेन भगाकारेणाङ्कयित्वा स्वराष्ट्रान्निर्वासयेत्। शूद्रः पुनश्चाण्डालीङ्गच्छंश्चण्डाल एव। अङ्क्य एवेति माधवीये पाठः। चाण्डालस्य तूत्कृष्टजातिस्त्र्यभिगमने बध एवेत्यर्थः। योनिव्यतिरिक्तस्थले गच्छतो दण्डमाह स एव "अयोनौ गच्छतो योषां पुरुषं वाऽभिमेहतः। चतुर्विंशतिको दण्डस्तथा प्रव्रजितागमे" इति। यस्तु योषां मुखादावभिगच्छति पुरुषं वाभिमुखं मेहति तथा प्रव्रजितां वा गच्छति असौ चतुर्विंशतिपणा दण्डनीय इत्यर्थः। स्त्रीकृते संग्रहणे दण्डमाह बृहस्पतिः "गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना। कामयेत् तत्र सा दण्ड्या नरस्याद्र्धदमः स्मृत" इति वचसा स्त्रियं प्रलोभ्य गच्छतः पुरुषस्य यो दण्डस्तदर्द्धं दण्ड्या"।

**स्त्रीसभ** न० स्त्रीणां सभा क्लीवत्वम्। स्त्रीसमाजे।

**स्त्रीसेवा** स्त्री ६त०। स्त्रीसम्भोगे व्यवायमधर्मेण नारीसेवने

**स्त्रीस्वभाव** पु० स्त्रिया इव स्वभावो यस्य। १अन्तःपुररक्षके महल्लके शब्दमा० ६त०। २स्त्रीणां शीले च। स्त्रीपुंधर्मशब्दे दृश्यम्।

**स्त्रैण** न० स्त्रिया इदम् अण् नञ्। १स्त्रीस्वभावे "स्त्रैणेन नीता विकृतिं लघिम्ना" भट्टिः। २स्त्रीविधेये स्त्रिया अपत्यं स्त्रीणां समूहो वा अण्। ३स्त्र्यपत्ये स्त्रीसमूहे न०।

**स्थ** त्रि० स्था—क। १स्थितिशीले प्रायेण उत्तरपदस्थित एवायं प्रयुज्यते यथा पदस्थः मार्गस्थः। २स्थले पु० शब्दर०।

**स्थग** संवरणे भ्वा० पर० सक० सेट् घटा० मिचि न वृद्धिः। स्थगति अस्थगीत्। अस्योपदेशत्वमस्य चिन्त्यमूलम्।

**स्थग** त्रि० स्थग-अच्। धूर्त्ते शब्दर०।

**स्थगन** न० स्थग-ल्युट्। आच्छादने हेमच०।

**स्थगित** त्रि० स्थग-क्त। १आवृते २तिरोहिते हेमच०।

**स्थगी** स्त्री स्थग्यतेऽनया घञर्थे क गौरा० ङीष्। ताम्बूलपात्रे करङ्के हेमच०।

**स्थगु** न० स्थग-उन्। गड़ौ (कुज) "तदेव स्थगु यद्दीर्घं रथघोणमिवायतम्। लम्बायाँ च प्रतीता च लेपयिष्यामिते स्थगु" रामा० बा० ९अ०।

**स्थण्डिल** न० स्थल-इलच् नुक् लस्य डः। १चत्वरे यज्ञत्वयनतिम्पूर्न्ये समीकृते प्रदेशे अमरः। "निषेदुषी स्थण्डिल एव केवले" कुमारः। २यज्ञार्थं परिष्कृतस्थाने शब्दर०

र्होमार्थे कुण्डप्रतिनिधित्वेन वालुकादिभिः कर्त्तव्ये मण्डलभेदे च "नित्यं नैमित्तिकं कर्म स्थण्डिले वा समाचरेत्। हस्तमात्रं तु तत् कुर्य्यात् वालुकाभिः समन्ततः" शा॰ति॰। "अथ वापि मृदा सुवर्णभावा करमात्रं चतुरङ्गुलोन्नतम्। हवने विदधीत वाङ्गुलोच्चं विबुधः स्थण्डिलमेववेदकोणम्" कुण्डोद्योतः। अथ वा कुण्ड करणाशक्तौ। तन्त्रान्तरे च "मृदा सुवर्णभावा वा शुद्धया वालुकयाऽपि वा। अङ्गुलोन्नतया वेदाङ्गुलोच्चं स्थण्डिलं विदुः। चतःकोणसदृक्प्राचीप्रवणमन्याङ्कतौ शुभम्। पञ्चाङ्गुलोन्नमथ वा रम्यं त्र्यङ्गुलसुन्नतम्। तस्मात् सम्यक् परीक्ष्यैव कर्त्तव्यं शुभवेदिकम्। हस्तमात्रं स्थण्डिलं वा संक्षिप्ते होमकर्मणि"। वशिष्ठः "कुण्डमेवंविधं न स्यात् स्थण्डिलं वा समाश्रयेत्" क्रियासारे। तत्करणप्रकारादि सं॰ त॰ दृश्यम्।

**स्थण्डिलशायिन्** पु॰ स्थण्डिले चत्वरे शेते व्रतवशात् शी-णिनि। व्रतार्थं चत्वरे शयितरि अमरः। "स्थण्डिलशायिनश्च" भट्टिः। [चत्वरे शयितरि शब्द र॰।

**स्थण्डिलेशय** पु॰ स्थण्डिले शेते अच् अलुक्समा॰। व्रतार्थं

**स्थपति** पु॰ स्था—क तस्य पतिः। १कञ्चुकिनि मेदि॰ २शिल्पिभेदे (छुतार) अमरः ३कुवेरे अजयः ४अधीशे ५वृहस्पतिसवनामकयागकर्त्तरि च अमरः। ६सत्तमे त्रि॰मेदि॰ तत्र अधीशपरत्वे "निषादस्थपतिर्गावेधुकेऽधिकृतः" कात्या॰ श्रौ॰ १।१।१२ "निषादस्थपतिर्गावेधुके चरावधिकृतः अधिकारी भवति"। एवं हि श्रूयते "यस्य रुद्रः प्रजाः शमयेत् वास्तुमध्ये रौद्रं गावेधुकम् चरुं निर्वपेत्" इत्येतास्मिन् प्रक्रम्य श्रुतम् "एतया निषादस्थपतिं याजयेदिति" निषादस्थपतिर्यजेतेत्यर्थः। तत्रायं सन्देहः किमत्र षष्ठीसमासः निषादस्य स्थपतिर्निषादस्थपतिरिति निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा। तत्र यदि षष्ठीसमासः तदा यो द्विजातिरेव विद्वान्निषादानामाधिपत्यं करोति तस्यात्राधिकारः यदि च कर्मधारयः तदा निषाद एव यः स्थपतिस्तस्यात्राधिकार इति। तत्र त्रैवर्णिकस्यैव समर्थत्वाद्विद्वत्त्वादग्निमत्त्वाच्चात्राधिकारो युज्यते अन्यजातीयस्य निषादस्याविद्वत्त्वेनानग्निमत्त्वेन चासमर्थत्वात्, तस्मात् षष्ठीसमास एवायमिति पूर्वपक्षः। सिद्धान्तस्तु कर्मधारयोऽयम् निषादश्चायं स्थपतिश्चेति कुतः? षष्ठीसमासपक्षे निषादपदे लक्षणाप्रसक्तेः न ह्यत्र षष्ठी श्रूयते यतः सम्बन्धः प्रतीयेत। अतो निषादपदेनैव षष्ठ्यर्थो लक्षणीयः इतरस्मिंस्तु पक्षे द्वयोरपि पदयोः स्वार्थतैव न लक्षणा तस्मान्निषाद एव स्थपतिरत्राधिकारी श्रुतिबलात् अविद्वानग्निमानपीति सिद्धम्। अपि चात्र निषादद्रव्यं दक्षिणा श्रूयेत कूटं दक्षिणा काणो वा गर्दभ इति कूटं हि निषादानामेवोपकारकम् नार्य्याणामिति" कर्क॰। वृहस्पतिसवकर्त्तरि तु "स्थपतिरित्येनं ब्रूयुः" कात्या॰ श्रौ॰ २२।५।२८ सू॰। "यराजानो ब्राह्मणा यं पुरस्कुर्वीरन् एतेन यजेत" "वृहस्पतिसवेन" सू॰। राज्ञा सहिता ब्राह्मणा यं ब्राह्मणं धर्मस्थापकत्वेन चाङ्गीकुर्वीरन् "एतेन स एतेन यजेत वृहस्पतिसवेन" सं॰व्या॰। वृहस्पतिसवकर्त्तवत् ६गोसवकर्त्तर्यपि यथोक्तं "स्थपतिरित्येनं ब्रूयुः" कात्या॰ श्रौ॰ २२।११।११सू॰। "गोसवयाजिनं जनाः"। राज्ञा सहिता विशः प्रजाः सर्वे पुरुषा यं पुरस्कुर्वीरन् (मुख्यत्वेनाङ्गीकुर्वीरन्) स गोसवेन यजेत २२।११।८ कर्क॰ "कारुभेदस्य लक्षणं यथा "वास्तुविद्याविधानज्ञो लघुहस्तो जितश्रम। दीर्घदर्शी च शूरश्च स्थपतिः परिकीर्त्तितः"।

**स्थपुट** त्रि॰ तिष्ठति स्था—क स्थं पुटं यत्र। १विषमोन्नतप्रदेशे हेमच॰। "स्थपुटगतमपि क्रव्यमव्यग्रमत्तीति" मालतीमा॰। २विषमस्थाने-सञ्चारिणि-जीवे पु॰ शिका॰।

**स्थल** स्थाने भ्वा॰ पर॰ अक॰ सेट् ज्वला॰। स्थलति अस्थालीत्। ष्ठलधातुनैवास्य गतार्थ इत्यन्ये।

**स्थल** न॰स्त्री॰स्थल-अच्। जलशून्ये अकृत्रिमे भूभागे अमरः स्त्रीत्वपक्षे ङीप्। "वनस्थलीर्मर्मरपत्रमोक्षाः" कुमारः। २कृत्रिमाकृत्रिमप्रदेशमात्रे ३कृत्रिमभूभागे तु न॰।

**स्थलकन्द** पु॰स्थलजः कन्दः। (वनओल) वन्यास्कन्दे रत्नमा॰

**स्थलकमल** न॰ स्थलजात कमलम्। स्थलपद्मे भावप्र॰।

**स्थलकुमुद** पु॰ स्थले कुमुदमस्यस्य सादृश्येन अच्। करवीरे राजनि॰।

**स्थलपद्म** न॰ स्थलजातं पद्मं शाक॰। स्वनामख्याते पुष्पप्रधानवृक्षे त्रि॰ स्थलजं पद्ममिव। २मानके पु॰ रत्नमा॰

**स्थलपद्मिनी** स्त्री स्थलपद्मानां समूहः तेषां सन्निकृष्टदेशो वा इति ङीप्। १स्थलपद्मसमूहे २तद्युक्तदेशे च। "ददर्श दूनः स्थलपद्मिनीं नलः" नैष॰।

**स्थलमञ्जरी** स्त्री स्थलस्य मञ्जरीव। अपामार्गे रत्नमा॰।

**स्थलशृङ्गाट** पु॰ स्थलजातः शृङ्गाटः शाक॰। १गोक्षुरे रत्नमा॰ तस्य कण्टकावृतत्वात् तथात्वम्।

**स्थलेरुहा** स्त्री स्थले रोहति रुह—क अलुक्स०। १घृतकुमार्य्याम् २दग्धारुहे च राजनि०।

**स्थलेशय** पु० स्थले शेते शी-अच् अलुक्स०। वराहरुरुप्रभृतौ पशौ राजनि०। २स्थलशायिनि त्रि०।

**स्थवि** पु० स्था किच् वेर्नेत्त्व। १तन्तुवाये उज्ज्वलद०। २स्वर्गे ३जङ्गमे च संक्षिप्त०।

**स्थविर** न० स्था—किरच् स्थवादेशः। १शैलेये गन्धद्रव्ये राजनि० २चतुर्मुखे ब्रह्मणि पु० हेमच०। ३अचले ४स्थिरे त्रि० उणा० ५वृद्धे च त्रि० अमरः। ५महाश्रावण्यां स्त्री राजनि०।

**स्थविष्ठ** त्रि०अतिशयेन स्थूलः इष्ठन् यणादिलोपे गुणः। अतिवृद्धे अमरः। ईयसुन् स्थवीयानपि अतिवृद्धे त्रि०स्त्रियां ङीप्।

**स्थाणु** पु० स्था नु पृषो० णत्वम्। १शिवे २शाखाशून्यवृक्षे च अमरः ३आयुधभेदे पु०नीलक०। ४दृढे त्रि० धरणिः शिवस्य स्थाणुशब्दवाच्यत्वे कारणमुक्तं वामनपु०४६अ०। यथा "समुत्तिष्ठन् जलात्तस्मात् प्रजास्ताः दृष्टवानहम्। ततोऽहं ताः प्रजा दृष्ट्वा रहिता एव तेजसा। क्रोधेन महता युक्तो लिङ्गमुत्पाट्य चाक्षिपम्। उत्क्षिप्तं सरसो मध्ये ऊर्द्धमेव यदा स्थितम्। तदाप्रभृति लोकेषु स्थाणुरित्येव विश्रुतम्"।

**स्थाणुतीर्थ** न० शैवे तीर्थभेदे वामनपु० १२अ०।

**स्थाण्डिल** पु० स्थण्डिले शयिताऽण्। व्रतार्थं स्थण्डिले शयितरि अमरः।

**स्थाण्वाश्रम** पु०न० ६त०। हिमाचलस्थिते शिवस्य तपश्चर्याश्रमभेदे "स्थाण्वाश्रमं हैमवतं जगाम" कुमारः।

**स्थाण्वीश्वर** पु० शिवलिङ्गभेदे "स्थाणुनाम्ना हि लोकेषु पूजनीयो दिवौकसाम्। स्थाण्वीशः स्थितो यस्मात् स्थाण्वीश्वरस्ततः स्मृतः" वामने ४२अ० तन्माहात्म्यादिकम्। तत्र दृश्यम्।

**स्थान** न० स्था—ल्युट्। १स्थितौ २सादृश्ये ३अवकाशे मेदि० ४सन्निवेशे ५वसतौ हेमच० ६पन्यसन्धौ त्रिका० ७भाजने हला० ८निकटे ९व्याकरणोक्ते प्रसङ्गे आदिश्यमानस्य यथादेः कारणभूते इगादौ। १० नीतिवेदिनामुपचयापचयहीने साम्यावस्थाने च अमरः। उपचयापचयौ च अष्टवर्गशब्दोक्तस्य कृष्यादेरेव भरतः। वसतिश्च लोकभेदः। स्वस्ववर्त्तिनां स्वस्वधर्मानुष्ठायिनां जनानां लोकविशेषात्मकं स्थानञ्च अग्निपु०उक्तं यथा "प्राजापत्यं ब्राह्मणानां स्मृतं स्थानं क्रियावताम्। क्षत्रियाणां तथा चैन्द्रं संग्रामेष्वनुवर्त्तिनाम्। गान्धर्वं शूद्रजातीनां परिचर्य्यानुकारिणाम्। अष्टाशीतिसहस्राणां यतीनामूर्द्ध्वरेतसाम्। स्मृतं तेषान्तु यत् स्थानं तदेव गुरुवासिनाम्। सप्तर्षीणान्तु यत् स्थानं स्मृतं तद्वत् वनौकसाम्। प्राजापत्यं गृहस्थानां गृहधर्मानुवर्त्तिनाम्। न्यासिनान्तु परं ब्रह्म योगिनाममृतं स्मृतम्। एकान्तवादिनां ब्रह्मध्यायिनां परमं पदम्। तामिस्रमन्धतामिस्रं महारौरवरौरवम्। असिपत्रवनं घोरं कालसूत्रमवीचिमत्। वेदस्य निन्दकानान्तु यज्ञव्याघातकारिणाम्। स्थानमेतत् समाख्यातं स्वधर्मविनिवर्त्तिनाम्" श्रुतिलिङ्गाधिकरणोक्ते ११क्रमे मीमां०। "स्थानं क्रमो योगबलं समाख्या पार्थसारथिः। १२स्थापके नियतस्थानमित्यादि।

**स्थानक** न० स्वार्थे क।१स्थानशब्दार्थे। स्थाने कं जलमत्र। २आलवाले हेमच०।

**स्थानचञ्चला** स्त्री स्थाने स्थितावपि चञ्चला। १वर्वरीवृक्षे शब्दच०। अल्पवातेन चञ्चलत्वात्तस्यास्तथात्वम्।

**स्थानच्युत** त्रि० स्थानात् स्वस्थानात् च्युतः। पदच्युते "स्थानस्थितस्य पद्मस्य मित्रे वरुणभास्करौ। स्थानच्युतस्य तस्यैव क्लेदशोषणकारकौ" गरुडपु० ११५अ०। स्थानभ्रष्टादयोऽप्यत्र। "स्थानस्थितास्तु पूज्यन्ते पूज्यन्ते च पदस्थिताः। स्थानभ्रष्टा न पूज्यन्ते केशा दन्ता नखा नराः" गरुडपु० ११५अ०।

**स्थानाध्यक्ष** त्रि० स्थाने अध्यक्षः। स्थानरक्षके हेमच०।

**स्थानिक** त्रि० स्थानेऽधिकृतः ठञ्। स्थानाध्यक्षे हेमच०।

**स्थानिन्** त्रि० स्थानमस्यास्ति रक्ष्यत्वेन इनि। १स्थानरक्षके स्थानं प्रसङ्गः अस्त्यर्थे इनि। व्याकरणोक्ते आदिश्यमानस्य यथादेः कारणे इगादौ "स्थानिवदादेशोऽनल्विधाविति" पाणिनिः।

**स्थानीय** न० स्थीयतेऽस्मिन् स्था—आधारे अनीयर्। १नगरे अमरः। स्थानं सादृश्यं वासं वाऽर्हति स्थानस्येदम् वा छ।२वासयोग्ये देशे ३सदृशे ४स्थानसम्बन्धिनि च त्रि०।

**स्थाने** अव्य० स्था—ने। १योग्यत्वे २औचित्ये च "स्थाने भवानेकनराधिपः सन्निति" रघुः। ३सत्ये ४सादृश्ये ५कारणार्थे च शब्दर०।

**स्थापत्य** पु० स्थपतिरेव स्वार्थे ष्यञ्। १अन्तःपुररक्षके कञ्चुकिप्रभृतौ अमरः। तस्य भावः ष्यञ्। २स्थपतिधर्मे न०

**स्थापक** त्रि० स्थापयति स्था-णिच्-पुक् ण्वुल्। यथावस्थानमुचितं तथा निवेशके। स्थितिस्थापकः।

**स्थापन** न० स्था-णिच्-पुक् ल्युट् । १आरोपणे २पुंसवनाख्ये गर्भसंस्कारे च मेदि० । ३समाधौ । युच् । स्थापनाप्यत्र स्त्री सा च निवेशने वादे भावपक्षस्य प्रमाणादिना व्यवस्थापने च । [ङीप् । पाठायाम् अमरः ।

**स्थापनी** स्त्री स्थाप्यतेऽनया स्था-णिच्-पुक् करणे ल्युट् ।

**स्थापित** त्रि० स्था-णिच्-पुक् क्त । १निश्चिते २निवेशिते ३न्यस्ते च मेदि० ।

**स्थामन्** न० स्था-मनिन् । १सामर्थ्ये अमरः २बले च ।

**स्थायिन्** त्रि० स्था-णिनि । १स्थितिशीले अलङ्कारोक्ते रसानुकूले रत्यादिभावे पु० । "विभावेनानुभावेन व्यक्तः सञ्चारिणा तथा । रसतामेति रत्यादिः स्थायी भावः सचेतसाम्" "अविरुद्धा विरुद्धा वा यं तिरोधातुमक्षमाः आस्वादाङ्कुरकन्दोऽसौ भावः स्थायीति सम्मतः" । "रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयं तथा । जुगुप्सा विस्मयश्चेत्थमष्टौ प्रोक्ताः शमोऽपि च" सा०द० । एते च क्रमेण शृङ्गारादीनां स्थायिभावाः । [अमरः ।

**स्थायुक** त्रि० स्था-उकञ् ।१स्थितिशीले २एकग्रामाधिकृते पु०

**स्थाल** न० स्थलति तिष्ठत्यन्नाद्यत्र आधारे घञ् । (थाल) १अन्नपात्रभेदे । २पाकपात्रे (हाँड़ि) स्त्री अमरः गौरा० ङीष् ।

**स्थालीपाक** पु० स्थाल्यां पाकः । गव्यदुग्धेन स्थाल्यां कृते १पाकभेदे । स्थाल्यां पच्यतेऽसौ पच-कर्मणि घञ् २चरौ तत्पाकप्रकारः चरुशब्दे दिङ्मात्रमुक्तः गोभिलोक्तप्रकारः सं०त० दर्शितो यथा

तत्र गोभिलः "अथोदूखलमुषले प्रक्षाल्य स्फ्यं च पश्चादग्नेः प्रागग्रान् कुशानास्तीर्य उपसादयति अथ हविर्निर्वपेदिति । व्रीहीन् यवान् वा कांस्येन चरुस्थाल्या वा अमुष्मै त्वा जुष्टं निर्वपामीति देवतानामोद्देशः सकृद्यजुषा द्विस्तूष्णीम् अथ पश्चादवहन्तुमुपक्रमते दक्षिणोत्तराभ्यां पाणिभ्यां त्रिःफलीकृतांस्तण्डुलां स्त्रिर्देवताभ्यः प्रक्षालयेत् द्विर्मनुष्येभ्यः सकृत् पितृभ्य इति । "पवित्रान्तर्हितांस्तण्डुलानावपेत् कुशलशृतमिव स्थालीपाकं श्रपयेत् प्रदक्षिणमुदायुवन् शृतमभिघार्य्य उदगुद्वास्य प्रत्यभिघारयेदिति" सू० । अस्यार्थः उपसादयति स्थापयति देवतानामोद्देशं देवतानामोच्चारणं यथा अग्नये अमुष्मै त्वा जुष्टं निर्वपामीत्यनेन उदूखलोपरि व्रीह्यादीन् कांस्यादिना सकृन्निर्वपेत् । अत्राऽमुष्मा इत्यत्र चतुर्थ्यन्तनामोच्चारणम् । अतएव कात्यायनः "असावितिनाम गृह्णाति" । नारायणीयेऽपि "अदः पदं हि यद्रूपं यत्र मन्त्रे हि दृश्यते । साध्याभिधानं तद्रूपं तत्र स्थाने नियोजयेत्" । अतोऽदः पद एव नामोहो नतु विष्णुपात्नजपादाविदमित्यादौ । एवञ्चाग्नये त्वा जुष्टं निर्वपामीति सामगानाम् यजुःप्रयोगो गोभिले निर्वापमात्रश्रुतेः यजुर्वेदिकसमन्त्रकप्रक्षणप्रोक्षणे सामगेन न कार्य्ये । यजुःपरिभाषणाच्च जैमिनिः "शेषे यजुःशब्दः इति । शेषे सम्मभिन्ने मन्त्रजाते । ततश्च यन्मन्त्रजातं प्रश्लिष्टपठितं गानपादभेदरहितं तद्यजुरिति । बहुदैवत्ये च बहुदेवतानामभिः प्रत्येकं निर्वापः । अत्रनिर्वापो मन्त्रेणैव होमोऽपि पृथक् । निर्वापपरिमाणन्तु होमसंख्याविशेषस्थित्यनुसारेणेत्याह छन्दोगपरिशिष्टम् "देवतासंख्ययागृह्य निर्वापांश्च पृथक् पृथक् । तूष्णीं द्विरेव गृह्णीयाद्धोमस्यापि पृथक् पृथक् । यावता होमनिर्वृत्तिर्भवेद् वा यत्र कीर्त्तिता । शेषञ्चैव भवेत् किञ्चित्तावन्तं निर्वपेच्चरुम्" । यद्यपि देवतासंख्ययेति वचनं चरुश्रपणीययोः द्रव्युपक्रम्य पठितं तथाप्याङ्गायालाघवेन चरुसामान्यपरमिति । चरुविशेषौ तु विद्याकरवाजपेयी "यत्र प्रयोजनाभावनिश्चयस्तत्रैव तदुपादानादिलोपः । यत्रानुष्ठानवेलायामेव पुरुषदोषेण प्रयोजनाभावो ज्ञायते तदा प्राक् तन्निश्चयात् शास्त्रप्रापितः पदार्थो नियमापूर्वमात्रार्थमनुष्ठेय" इति । अतएव यदा त्वालस्यादिना व्रीह्यादिस्थाने तण्डुला गृहीताः तदापि अवघातादि समाचारन्ति याज्ञिकाः पठन्ति च । "घाते न्यूने तथा छिन्ने साद्गुण्ये मान्त्रिके तथा । यत्र मन्त्राः प्रयोक्तव्यामन्त्रायत्तार्थसाधकाः" । मान्त्रिके मन्त्रसाध्ये अवघातादौ । न्यूने तत्काले मन्त्रपाठाभावेऽपि यज्ञकाले मन्त्राः पाठ्याः । अस्मिंस्तु मन्त्रार्थज्ञानस्य नास्त्युपयोगः । चरुस्थालीयपरिमाणमाह छन्दोगपरिशिष्टम् । "तिर्य्यगूर्द्धसमिन्मात्रा दृढा नातिहृहन्मुखी । मृण्मय्यौडुम्बरी वापि चरुस्थाली प्रशस्यते" । गर्भस्तार दीर्घाभ्यां प्रादेशप्रमाणा चरुस्थाली औडुम्बरी ताम्रमती एषा पायसचरावपि न निषिद्धा "पयोदुग्धतसारञ्च ताम्रपात्रे न दुष्यति" स्मृतिसागरधृतवचनाच्च । अतएव शारदातिलके "ततश्च संस्कृते वह्नौ गोक्षीरेण चरुं पचेत् । मन्त्रेण क्षालिते पात्रे नवे ताम्रमयादिके" । दक्षिणोत्तराभ्यामिति दक्षिण उत्तर उपरि ययोः पाणिभ्याभ्यां मुषलं गृहीत्वा इति शेषः । त्रिःफलीकृतान्

"चरतः किल दुश्चरं तपः तृणविन्दोः परिशङ्कितः पुरा। प्रजिघाय समाधिभेदिनीं हरिरस्मै हरिणीं सुराङ्गनाम्" रघुः।

**हरित्** पु॰ हृ-इति। १नीलपीतमिश्रितवर्णे (पाटाररङ्ग पलाशवर्णे च अमरः २तद्वति त्रि॰। ३सूर्य्याश्वे त्रिका॰ ४मुद्गे हेमच॰। ५सिंहे ६सूर्य्ये ७विष्णौ च पु॰ ८दिशि स्त्री अमरः। ९हरिद्रायां राजनि॰ १०तृणे न॰ मेदि॰।

**हरित्पर्ण** न॰ हरित् पर्णमस्य। मूलके राजनि॰।

**हरित** पु॰ हृ-इतच्। १सिंहे २मन्थानतृणे राजनि॰ ३हरिद्वर्णे ४तद्वति त्रि॰ अमरः स्त्रियां ङीप् तस्य नश्च। ५दूर्वायां मेदि॰ ६जयन्त्यां ७हरिद्रायां ८कपिलद्राक्षायां ९पाच्यां १०नीलदूर्वायाञ्च स्त्री राजनि॰ टाप्। ११स्थौणेयके न॰ राजनि॰। [शाके न॰ राजनि॰

**हरितक** न॰ हरितेन वर्णेन कायति प्रकाशते कै-क।

**हरितपत्रिका** स्त्री हरितं पत्रं यस्याः कप् कापि अत इत्त्वम्। पाच्यां राजनि॰।

**हरितशाक** पु॰ हरितं शाकमस्य। शोभाञ्जने राजनि॰।

**हरिताल** न॰ हरिवर्णस्य पीतवर्णस्य तालः प्रतिष्ठा यत्र। १पीतवर्णे उपधातुभेदे "स हरितालसमाननवांशुकः" माघः। २पीतवर्णपक्षिभेदे पुंस्त्री॰ राजनि॰। स्त्रियां ङीष्। स्वार्थे क। हरितालं न॰ अमरः। "हरितालं द्विधा प्रोक्तं पत्राख्यं पिण्डसंज्ञकम्। तयोराद्यं गुणैः श्रेष्ठं ततो हीनगुणं परम्। स्वर्णवर्णं गुरु स्निग्धं सपत्रं चाभ्रपत्रवत्। पत्राख्यं तालकं विद्याद्गुणाढ्यं तद्रसायनम्। निष्पत्रं पिण्डसदृशं स्वल्पसत्वं तथा गुरु। स्त्रीपुष्पहारकं स्वल्पगुणं तत् पिण्डतालकम्। हरति च हरितालञ्चारुतां देहजाताम् सृजति च बहुतापामङ्गसङ्कोचपीडाम्। वितरति कफवातौ कुष्ठरोगं विदध्यादिदमशितमशुद्धम् मारितञ्चाप्यसम्यक्"। "तालकं कणशः कृत्वा तच्चूर्णं काञ्जिके पचेत्। दोलायन्त्रेण यामैकं ततः कूष्माण्डजद्रवैः। तिलतैले पचेद्यामं यामञ्च त्रिफलाजले। एवं यन्त्रे चतुर्यामं पक्वं शुद्ध्यति तालकम्"। अथ तालस्य मारणविधिः "सदलं तालकं शुद्धं पौनर्नवरसेन तु। खल्वे विमर्दयेदेकं दिनं पश्चाद्विशोषयेत्। ततः पुनर्नवाक्षारैः स्थाल्यामर्द्धं प्रपूरयेत्। तत्र तद्गोलकं धृत्वा पुनस्तेनैव पूरयेत्। आकण्ठं पिठरं तस्य पिधानं धारयेन्मुखे। स्थालीं चुल्ल्यां समारोप्य क्रमाद्वह्निं विवर्द्धयेत्। दिनान्यन्तरशून्यानि पञ्च वह्निं प्रदापयेत्। एवं तन्म्रियते तालं मात्रा तस्यैकरक्तिका। अनुपानान्यनेकानि यथायोग्यं प्रयोजयेत्"। एवं शोधितस्य मारितस्य तालकस्य गुणाः। "हरितालं कटु स्निग्धं कषायोष्णं हरेद्विषम्। कण्डूकुष्ठास्यरोगास्रकफपित्तकचव्रणान्"। "तालकं हरते रोगान् कुष्ठमृत्युज्वरापहम्। शोधितं कुरुते कान्तिं वीर्य्यवृद्धिं तथायुषम्" भावप्र॰।

हरितालखगमांसगुणाः "हरितालोऽल्पविट्कः स्यात् कषायो मधुरो लघुः। रक्तपित्तप्रशमनस्तृषाघ्नो वातकोपनः" राजनि॰।

**हरितालिका** स्त्री हरेस्तालो हस्ततालो यस्यां कप् अत इत्त्वम्। १सौरभाद्रशुक्लचतुर्थ्याम् हरितवर्णाय अलति पर्य्याप्नोति अल-ण्वुल्। २दूर्वायाम् त्रिका॰। अण् ङीप्। हरिताली दूर्वायाम् सा च आकाशरेखायां मेदि॰ खड्गलतायाम् हरितालिकायाञ्च।

"भाद्रे मासि सिते पक्षे वहुदैवतसंयुता। हरिताली चतुर्थी स्यात् सर्वाणीप्रीतिदा सदा। भाद्रे मासि सिते पक्षे चतुर्थ्यांख्याभियोगतः। ददाति किल्विषं घोरं दृश्चन्द्रो न संशयः। करचित्रानलर्क्षेषु हरौ स्वप्ते चतुर्थिका। हरिताली समाख्याता रुद्राणीप्रीतिदा सदा" राजमार्त्तण्डः

**हरिताश्म** न॰ हरितवर्णमश्म अश्मेव वा अच् समा॰(पेरोजा) १मणिभेदे २तुत्थे (तुँत) उपधातुभेदे च राजनि॰।

**हरिदर्भ** पु॰ हरिर्हरिद्वर्णो दर्भः। हरिद्वर्णे कुशे अमरः।

**हरिदश्व** पु॰ हरिन्नामकोऽश्वो यस्य। १सूर्य्ये २अर्कवृक्षे च अमरः।

**हरिदेव** पु॰ हरिर्देवोऽधिष्ठाता अस्य। श्रवणानक्षत्रे।

**हरिद्गर्भ** पु॰ हरिद्वर्णो गर्भो यस्य। हरिद्वर्णे कुशे राजनि॰। "दर्भौ द्वौ च गुणे तुल्यौ तथापि च सितोऽधिकः। यदि श्वेतकुशाभावस्त्वपरं योजयेद्भिषक्" राजनि॰। "दर्भद्वयं त्रिदोषघ्नं मधुरं तुवरं हिमम्। मूत्रकृच्छ्राश्मरीतृष्णावस्तिरुक् प्रदरास्रजित्" भावप्र॰। तन्मूलगुणाः "कुशमूलं हिमं रुच्यं मधुरं पित्तनाशनम्। रक्तज्वरतृषाश्वासकामलादोषमोक्षकृत्" राजनि॰।

**हरिद्रव** पु॰ हरिवर्णः पिङ्गलवर्णो द्रव इव। नागकेशररजसि त्रि॰।

**हरिद्रा** स्त्री हरिं पीतवर्णं द्रवति द्रु-गतौ ड। स्वनामख्याते ओषधिभेदे।

"हरिद्रा कटुका तिक्ता रूक्षोष्णा कफपित्तनुत्। वर्ण्या त्वग्दोषमेहास्रशोथपाण्डुव्रणापहा"। (वनहरिद्रा) "अरण्यहरिद्राकन्दः कुष्ठवातास्रनाशनः"। (कर्पूरहरिद्रा) "दार्वी भेदाम्रगन्धा च सुरभिर्दारु दारु च। कर्पूरा पद्मपत्रा स्यात् सुरभिः सुरनायिका। आम्रगन्धिहरिद्रा या सा शीता वातला मता। पित्तहृन्मधुरा तिक्ता सर्वकण्डूविनाशिनी" भावप्र०।

**हरिद्रागणेश** पु० हरिद्रावर्णयुक्तो गणेशः। पीतवर्णे गणेशभेदे तन्त्रसारः। [स्त्रियां ङीष्।

**हरिद्राङ्ग** पुंस्त्री० हरिद्रेव अङ्गमस्य। हरितालखगे शब्दच०

**हरिद्राभ** पु० हरिद्रेव आभाति आ+भा-क। १पीतशाले (पियाशाल) २कर्बुरके ३पीतवर्णे च। ४तद्वति त्रि० अमरः।

**हरिद्राराग** त्रि० हरिद्राया इव रागः रञ्जनमनुरागः। अस्थिरानुरागे सौहृदे। "क्षणमात्रानुरागश्च हरिद्राराग उच्यते" हला०।

**हरिद्रु** पु० हरिः हरिद्वर्णो दारुदिद्वारा द्रुः। १तरुमात्रे हेमच०। २दारुहरिद्रायाञ्च अमरः। [तीर्थभेदे

**हरिद्वार** न० हरेस्तत्प्राप्तेः द्वारं सेवनात्। स्वनामख्याते

**हरिनामन्** न० हरेर्नाम तदाख्यानं वा। १विष्णुनामनि २तदाख्याने च हरेरिव नामास्य। ३मुद्गे पु० त्रिका०।

**हरिनेत्र** न० हरेर्नेत्रमिव। १श्वेतपद्मे राजनि०। ६त०। २विष्णोर्लोचने। हरेः सिंहस्येव नेत्रमस्य दीर्घत्वात्। ३पेचके पुंस्त्री० त्रिका० स्त्रियां ङीष्।

**हरिन्मणि** पु० हरिद्वर्णो मणिः। मरकते मणौ अमरः।

**हरिन्मुद्ग** पु० हरिद्वर्णो मुद्गः। शरदि पक्वे मुद्गे राजनि०।

**हरिप्रिय** न० हरेर्विष्णोः प्रियम्। १कालीयके चन्दने शब्दच०। २उशीरे राजनि०। ३कदम्बे पु० शब्दच०। ४पीतभृङ्गराजे ५विष्णुकन्दे ६करवीरे ७शङ्खे दवमूले पु० राजनि०। ९शिवे १०शालूके च पु०। ११लक्ष्म्यां स्त्री १२तुलस्यां १३पृथिव्यां १४द्वादश्यां तिथौ च स्त्री। १५हरिवल्लभे त्रि०। [अमरः।

**हरिबालुक** न० हरेर्विष्णोः प्रिया बालुकास्य। एलवालुके

**हरिभक्त** त्रि० हरौ विष्णौ भक्तः। १विष्णुभक्तियुते "सर्वजीवेषु यो विष्णुं भावयेत् समभावतः। हरौ करोति भक्तिञ्च हरिभक्तः स च स्मृतः" ब्रह्मपु० २५ अ० उक्ते २सर्वत्रसमदृष्टिपूर्वकहरिसेवके पु०। [शब्दर०।

**हरिभद्र** न० हरिं भद्रयति सन्तर्पयति अच्। हरिबालुके

**हरिभुज्** पु० हरिं भेकं भुङ्क्ते भुज-क्विप्। सर्पे शब्दच०।

**हरिमन्थ** पु० मथ्यते मन्थः हरिर्मन्थ एकदेशो यस्य। १चणके राजनि० तस्य बहुमन्थनेऽपि पीतत्वामपायात्तथात्वम्। हरिं सर्पं मथ्नाति मन्थ-अण्। २गणिकारिकायाम् शब्दच०। ३देशभेदे पु० भरतः। [१चणके भरतः।

**हरिमन्थक** पु० हरिः पीतो मन्थ एकखण्डो यस्य कप्।

**हरिमन्थज** पु० हरिमन्थे देशभेदे जायते जन-ड। चणके अमरः। २कृष्णमुद्गे च हेमच०। [हेमच०।

**हरिय** पु० हरिं हरिद्वर्णं याति या-क। पीतवर्णघटके

**हरिलोचन** पुंस्त्री० हरेरिव लोचनमस्य। १कर्कटे (काँकड़ा) त्रिका०। २पेचके।

**हरिवंश** पु० ६त०। १विष्णुवंशे हरेर्वंशो वर्ण्यत्वेनास्त्यत्र अच्। महाभारतान्तर्गते खिलरूपे व्यासकृते २ग्रन्थभेदे। तत्प्रतिपाद्यविषयाश्च हरिवं० २२५ अ० उक्ता यथा "हरिवंशेऽत्र वृत्तान्ताः कीर्त्यन्ते क्रमशोदिताः। तत्राद्यमादिसर्गस्तु भूतसर्गस्ततः परः। पृथोर्वैन्यस्य चाख्यानं मनूनां कीर्त्तनं तथा। वैवस्वतकुलोत्पत्तिर्धुन्धुमारकथा तथा। गालवोत्पत्तिरित्थं त्रिशङ्कोश्चाप्यनुकीर्त्तनम्। पितृकल्पस्तथोत्पत्तिः सोमस्य च बुधस्य च। अमावसोरन्वयस्य कीर्त्तनं कीर्त्तिवर्द्धनम्। द्युतिप्रतिष्ठ शक्रस्य प्रभवः क्षत्रवृद्धिजः। दिवोदासप्रतिष्ठा च त्रिशङ्कोः क्षत्रियस्य च। ययातिचरितञ्चैव पुरुवंशस्य कीर्त्तनम्। कीर्त्तनं कृष्णसम्भूतेः स्यमन्तकमणेस्तथा। संक्षेपात् कीर्त्तिता विष्णोः प्रादुर्भावास्ततः परम्। तारकामययुद्धञ्च ब्रह्मलोकस्य वर्णनम्। योगनिद्रासमुत्थानं विष्णोर्वाक्यञ्च वेधसः। पृथ्वीशापश्च देवानामंशावतरणं तथा। ततो नारदवाक्यञ्च स्वप्नगर्भविधिस्तथा। आर्यास्तवः पुनः कृष्णसमुत्पत्तिः प्रपञ्चतः। गोव्रजे गमनं विष्णोः शकटस्य निवर्त्तनम्। पूतनाया वधो भङ्गो यमलार्जुनयोरपि। वृकसन्दर्शनञ्चैव वृन्दावननिवेशनम्। प्रावृषो वर्णनञ्चापि यमुनाह्रददर्शनम्। कालियस्यापि दमनं धेनुकस्य वधस्तथा। प्रलम्बनिधनञ्चैव शरद्वर्णनमेव च। गिरियज्ञप्रवृत्तिश्च गोवर्द्धनविधारणम्। गोविन्दस्याभिषेकश्च गोपीसंक्रीडनं तथा। अरिष्टकस्य च वधः कोशिनो निधनं तथा। अक्रूरागमनञ्चैव नागलोकस्य दर्शनम्। धनुर्भङ्गस्य कथनं कंसवाक्यमतः परम्। कुवलयापीडवधश्चाणूरान्ध्रवधस्तथा। कंसस्य निधनञ्चापि विलापः कंसयोषिताम्। उग्रसेना-

भिषेकश्च यादवाश्वासनं तथा। प्रत्यागतिर्गुरुकुलाद्‌योक्ता रामकृष्णयोः। मथुरायाश्चोपरोधो जरासन्धनिवर्त्तनम्। विकद्रुवाक्यं रामस्य दर्शनं भाषणं तथा। गोमन्तारोहणञ्चापि जरासन्धगतिस्तथा। गोमन्तस्य गिरेर्दाहः करवीरपुरे गतिः। शृगालस्य वधस्तत्र मथुरागमनं ततः। यमुनाकर्षणञ्चैव मथुरापक्रमस्तथा। उपायेन वधः कालयवनस्य प्रकीर्त्तितः। निर्माणं द्वारवत्यास्तु रुक्मिणीहरणं तथा। विवाहश्चैव रुक्मिण्या रुक्मिणो निधनं तथा। बलदेवाह्निकं पुण्यं बलमाहात्म्यमेव च। नरकस्य वधः पारिजातस्य हरणं तथा। निकुम्भस्य वधाख्यानं प्रपञ्चेनैव कीर्त्तितम्। प्रभावत्याश्च हरणं वज्रनाभवधस्तथा। द्वारवत्या विशेषेण पुनर्निर्माणकीर्त्तनम्। द्वारकायां प्रवेशश्च सभायाश्च प्रवेशनम्। नारदस्य च वाक्यानि वृष्णिवंशानुकीर्त्तनम्। षट्पुरस्य वधाख्यानमन्धकस्य निबर्हणम्। समुद्रयात्रा कृष्णस्य जलक्रीड़ाकुतूहलम्। तथा भैमप्रवीराणां मधुपानप्रवर्त्तनम्। ततश्छालिक्यगान्धर्वसमुदाहरणं हरेः। भानोश्च दुहितुर्भानुमत्या हरणकीर्त्तनम्। शम्बरस्य वधश्चैव धन्योपाख्यानमेव च। वासुदेवस्य माहात्म्यं बाणयुद्धं प्रपञ्चितम्। भविष्यं पुष्करञ्चैव प्रपञ्चेनैव कीर्त्तितम्। वाराहं नारसिंहञ्च वामनं बहुविस्तरम्। कैलासयात्रा कृष्णस्य पौण्ड्रकस्य वधस्ततः। हंसस्य डिम्भकस्यैव वधश्चैव प्रकीर्त्तितः। पुरत्रयस्य संहार इति वृत्तान्तसंग्रहः। कथितो नृपशार्दूल! सर्वपापप्रणाशनः। वृत्तान्तं शृणुयाद्यस्तु सायं प्रातः समाहितः। स याति वैष्णवं धाम लब्धकामः कुरूद्वह!। धन्यं यशस्यमायुष्यं भुक्तिमुक्तिफलप्रदम्”।

**हरिवल्लभा** स्त्री। १जयायां २तुलस्यां राजनि० ३लक्ष्म्याञ्च।

**हरिवात्** पु० हरिणा घोटकेन उच्चैःश्रवसा वाति गच्छति वा-शतृ। इन्द्रे हलायुधः।

**हरिवर्ष** न० हरिनामकं वर्षम्। जम्बुद्वीपस्य नववर्षमध्ये वर्षभेदे त्रिका०।

“एवं दक्षिणेनेलावृतं निषधो हेमकूटो हिमालय इति प्रागायता यथा नीलादयोऽयुतयोजनोत्सेधा हरिवर्षकिंपुरुषभारतानां यथासंख्यम्” भाग ५स्क०१६अ०

**हरिवासर** न० हरिप्रियं वासरम्। १एकादशीदिवसे २द्वादशीप्रथमपादे च। “अस्मात्सि(श्रि)त्य पापानि तिष्ठन्ति हरिवासरे” इति। “द्वादश्याः प्रथमः पादो हरिवासरसंज्ञकः” इति च एकादशीतत्त्वे विष्णुधर्मो०।

**हरिवाहन** पु० हरिं वाहयति स्थानान्तरं नयति वह-णिच् ल्यु। १गरुड़े हारा०। हेम०। २हरिवाहनमप्यत्र न०।

**हरिवीज** न० हरेर्वीजमुत्पत्तिकारणत्वेनास्त्यस्य अच्। हरिताले “हरितालं हरेर्वीजं लक्ष्म्याबीजं मनःशिला” इति वैद्यकम्।

**हरिशयन** न० हरेः शयनं निद्रा। १विष्णुनिद्रायाम्। हरेः शयनं यत्र। २तदुपलक्षिते काले। स च “मैत्राद्यपादे स्वपितीह विष्णुः” इत्युपक्रम्य “प्रबुध्यते मासचतुष्टयेन” इत्यन्तेन दर्शितः आषाढस्य शुक्लद्वादश्यवधिकार्त्तिकशुक्लद्वादशीपर्य्यन्तरूपो मासचतुष्टयात्मकः। उत्थानैकादशीशब्दे १०७पृ० दृश्यम्।

**हरिश्चन्द्र** पु० हरिः चन्द्र इव कस्य सुट्। सूर्य्यवंश्ये त्रिशङ्कुपुत्रे नृपभेदे। ऋषिभिन्ने तु न सुट्। हारिश्चन्द्र एव।

**हरिश्चन्द्रपुर** न० ६त०। सौभनगरे त्रिका०।

**हरिषेण** पु० जिनचक्रवर्त्तिविशेषे हेमच०। हरिसुतोऽप्यत्र।

**हरिसङ्कीर्त्तन** न० हरेर्हरिनाम्नः संकीर्त्तनं कथनम्। श्रीविष्णुनाम्नोच्चारणे “सकलं निष्फलं राजन्! हरिसङ्कीर्त्तनं विना” इति कर्मलोचनम्।

**हरिहय** पु० हरिनामा हरिवर्णो वा हयो यस्य। इन्द्रे अमरः “हरिं विदित्वा हरिभिश्च वाजिभिः” इति रघौ तस्य हरिवर्णतुरगत्वमुक्तम्।

**हरिहर** पु० हरियुक्तो हरः। हरिहरयोः संश्लिष्टार्द्धदेहतया स्थिते मूर्त्तिभेदे देवप्रतिमाशब्दे ३७०१ तन्मूर्त्तिलक्षणं दृश्यम्। इ०। २शिवनारायणयोः द्वि० व०।

**हरिहरक्षेत्र** न० हरिहरयोः प्रियं क्षेत्रम्। गङ्गागण्डकीसङ्गमान्तिकदेशस्थे पाटलिपुत्रादुत्तरस्यां दिशि स्थिते तीर्थभेदे।

**हरिहरात्मक** पु० १गरुड़े २शिवरूपे च शब्दर०।

**हरीतकी** स्त्री० हरिं पीतवर्णं फलद्वारा इता प्राप्ता इण-क्त संज्ञायां कन् गौरा० ङीष्। १स्वनामख्याते वृक्षे तस्याः फलम् अण् तस्य लुप्। २हरीतकीफले स्त्री अमरः। “कदाचित् कुपिता माता नोदरस्था हरीतकी” इति वैद्यकम्। चेतकीशब्दे २९६२ पृ० दृश्यम्।

**हरेणु** स्त्री हृ-एणु। १रेणुकानामगन्धद्रव्ये अमरः। २कुलस्त्रियां। ३सतीले (मटर) पु० मेदि०। स्वार्थे क तत्रैव।

**हर्त्तृ** त्रि० हृ-तृच्। १हरणकारिणि। २चौरे ३सूर्य्ये च पु०

**हर्मन्** न० हृ+मनिन् । जृम्भणे (हाइतोला) शब्दरत्नावली ।

**हर्मित** त्रि० हर्मन्+तार० इतच् । १जातजृम्भणे शब्दर० २दग्धे ३ क्षिप्ते च मेदि० ।

**हर्म्य** न० हृ-यत् सुट् च । इष्टकाकाष्ठादिरचिते धनिनां गृहभेदे अमरः "रम्यं हर्म्यतलम्" इति प्रबोध० ।

**हर्य्य** कान्तौ अक० गतौ सक० भ्वा० पर० सेट् । हर्य्यति अह-र्य्यीत् । [अमरः । स्त्रियां ङीप् २कुवेरे च जटा० ।

**हर्य्यक्ष** पुंस्त्री० हरि पिङ्गलमक्षि यस्य षचसमा० । १सिंहे

**हर्य्यश्व** पु० हरिनामा हरिवर्णो वाऽश्वोऽस्य । इन्द्रे ।

**हर्ष** पु० हृष-घञ् । १सुखे अमरः २इष्टाधिगमजन्यानन्दे । ३कन्दर्पपितरि "पुलस्त्य उवाच । कन्दर्पो हर्षतनयो योऽसौ कामो निगद्यते । स शङ्करेण संदग्धो ह्यनङ्गत्वमुपागतः" । वामनपु० ५अ० । ४कलियुगीयन्वपभेदे हर्षचरिते तत्कथा दृश्या । [शब्दमा० ।

**हर्षक** त्रि० हृष-णिच् ण्वुल् । १हर्षकारके । २पर्वतविशेषे

**हर्षण** पु० हर्षयति अभीष्टदानात् हृष-णिच-ल्यु । १वि-ष्कम्भादिमध्ये चतुर्दशे योगे ज्यो० । २हर्षकारके त्रि० । ३नेत्ररोगभेदे ४श्राद्धभेदे ५श्राद्धदेवभेदे पु० शब्दच० । हृष-भावे ल्युट् । ६हर्षे न० ।

**हर्षपद** न० ६त० । नील० ताजकोक्ते ग्रहविशेषस्य लग्नादिस्थानभेदे । यथोक्तम् "नन्दत्रिषड्लग्नभवर्क्षपुत्र-व्यया इलाद्यर्षपदं क्रमोक्तम् । त्रिभं त्रिभं लग्नभतः क्रमेण स्त्रीणां नृणां रात्रिदिनेषु तेषु" । हर्षस्थाना-दयोऽप्यत्र । "न हर्षस्थानमाश्रितः" नीलक० ।

**हर्षमाण** पु० हृष-ताच्छील्ये चानश् । हृष्टचित्ते अमरः ।

**हर्षयित्नु** पु० हृष् णिच्-इत्नु । १पुत्रे २स्वर्णे न० मेदि० । ३हर्षणशीले त्रि० । [२हर्षकारके ।

**हर्षिणी** स्त्री हृष-णिच-णिनि ङीप् । १विजयायाम्

**हर्षित** त्रि० हर्षो जातोऽस्य इतच् । १जातानन्दे । २हर्ष-स्थानगते ग्रहे च ।

**हर्षुल** पुंस्त्री० हृष+उलच् । १मृगे स्त्रियां ङीष् । २कामुके त्रि०सि०कौ० । ३हर्षणशीले त्रि० । [लादि० हलः हालः

**हल** विलेखे भ्वा०पर०सक० सेट् । हलति अहालीत् अह-

**हल** न० हल्यते कृष्यतेऽनेन हल-घञर्थे करणे क । लाङ्गले अमरः । कृषिशब्दे २१९८पृ० दृश्यम् ।

**हलदी** स्त्री हल-शष्ट-हलनं कर्षकमपि दायति शोधयति दै-क गौरा०ङीष् । हरिद्रायाम् राजनि० ।

**हलधर** पु० हलं धरति आयुधत्वेन कृषिसाधनत्वेन वा धृ-अच् । १बलरामे शब्दर० । २कृषके त्रि० "उन्मूलिता हलधरेण पदावघातैः" उद्भटः ।

**हलभूति** स्त्री हलेन हलसाध्या भूतिः । कृषिवृत्तौ शब्दर०

**हलभृत्** पु० हलं बिभर्त्ति भृ-क्विप् । १बलदेवे त्रिकाण्ड० २लाङ्गलधारके च । [३कृषिकार्य्ये च ।

**हलभूति** पु० ऋपदर्षे १मुनिभेदे त्रिका० । २हलस्य धारणे

**हला** अव्य० हेति लीयते ला-क । नाट्योक्तौ १सखीसम्बो-धने अमरः । २मद्यां जटा०३पृथिव्यां स्त्री ४जले च स्त्री अजयपालः ।

**हलायुध** पु०हलेन आयुध्यति आ+युध क । १बलदेवे अमरः २प्राङ्गाणसर्वस्वादिग्रन्थकारके विद्वद्भेदे च ।

**हलाह** पुंस्त्री० । चित्रिताश्वे हेमच० स्त्रियां ङीष् ।

**हलाहल** पु०हलेनेव आहलति विलिखति आ+हल-अच् । १विषभेदे २ब्रह्मसर्पे ३अञ्जनायां मेदि० । ४बुद्धभेदे त्रिका० ।

**हलि** पु० हल-इन् । हृद्भले शब्दर० ।

**हलिन्** पु० हलोऽस्त्यस्यायुधत्वेन कृषिसाधनत्वेन वा इनि । १बलरामे अमरः २कृषके त्रि० । हलस्य आकारो विद्यते यस्या ङीप् हलिनी (विषलाङ्गला) ३लाङ्गली-हक्षे रत्नमा० इनि । हलानां समूहः ङीप् ४हल-समूहे स्त्री । [राजनि० ।

**हलिप्रिय** पु० ६त० । १कदम्बहक्षे अमरः । २मदिरायां स्त्री

**हली** स्त्री हल-इन् ङीप् । कलिकारीहक्षे राजनि० ।

**हलीन** पु० हलाय हितः ख । शाकहक्षे (शेगुन) शब्दच० ।

**हली(म)सक** पु० पाण्डुरोगभेदे "यदा तु पाण्डोर्वर्णः स्याद्ध-रित श्यावपीतकः । बलोत्साहः क्षयस्तन्द्रामन्दाग्नित्वं मृदुज्वरः । स्त्रीष्वहर्षोऽङ्गमर्दश्च श्वासतृष्णारुचिभ्रमाः । हली(म)सकं तदा तस्य विद्याद्‌निलपित्ततः" भावप्र० ।

**हलीशा** स्त्री हलस्य ईशा शक० । लाङ्गलदण्डे ।

**हल्य** त्रि० हलं हलकर्षणमर्हति तस्येदं वा यत् । १हलकर्ष-णयोग्ये क्षेत्रादौ अमरः । २हलसम्बन्धिनि च । हलानां समूहः यत् । ३हलसमूहे स्त्री अमरः । [अह्नीत् ।

**हल्ल** विकाशे भ्वा० पर०अक० सेट् भाजुदीक्षितः । हल्लति

**हल्लक** न० हल्ल-ण्वुल् भानुदीक्षितः । हल-सम्प०भावे क्विप् हलं लाति ला-क । संज्ञायां कन् वा । रक्तकह्लारे (हेला) अमरः ।

**हल्लीष** न० हल-क्विप् लष-अच् पृषो० कर्म० । स्त्रीणां मण्डलिकाकारनृत्ये । ततः स्वार्थे क । तत्रैव । "मण्डलेन तु यन्नृत्यं स्त्रीणां हल्लीषकन्तु तत्" हेमच०

२रासक्रीडायाञ्च तल्लक्षणं यथा "पृथु सुवृत्तं मसृणं वितस्तिमात्रोन्नतं कौ विनिखन्य शङ्कुकम्। आक्रम्य पद्भ्यामितरेतरन्तु हस्तैर्भ्रमोऽयं खलु रासगोष्ठी" हरिवं०टी०नीलकण्ठः। [३होमे ४आह्वाने च अमरः।

**हव** पु० हु-अप् ह्वे-अप् संप्र० पृषो० वा। १यज्ञे २आज्ञायां

**हवन** न० हु-भावे ल्युट्। होमे देवाद्युद्देशेन मन्त्रपूर्वकं वह्नौ हविःप्रक्षेपे शब्दच०। [त्रिका०

**हवनी** स्त्री हूयतेऽस्यां हु-आधारे ल्युट् ङीप्। यज्ञकुण्डे

**हवनीय** त्रि० हु-कर्मणि अनीयर्। होमीयद्रव्ये।

**हवा** अव्य० ह च वा च द्वन्द्व०। प्रसिद्ध्यर्थे।

**हविरशन** पु०हविरश्नाति अश-ल्यु।१वह्नौ हेमच०।२चित्रकवृक्षे च। भावे ल्युट्।३हुतभोजने न०। [राजनि०

**हविर्गन्धा** स्त्री हविषो गन्धो यस्याम्। शम्यां (शाइ)

**हविर्गेह** न० हविषो गेहम्। यज्ञमण्डपपश्चिमस्थे हवनीयद्रव्यस्थापनार्थे गेहभेदे हेमच०। [क्षारीवृक्षे रत्नमा०।

**हविर्मन्थ** पु० हविषे मथ्यतेऽसौ मन्थ-कर्मणि घञ्। गणि-

**हविष्य** न० हविषे हितम् यत्। १घृते हेमच०। स्वल्पाके हैमन्तिकादावन्ने च "चेरुर्हविष्यं भुञ्जानाः" भाग० १०। "नारिकेलफलञ्चैव कदलीं लवलीं तथा। आम्रमामलकञ्चैव पनसञ्च हरीतकीम्। व्रतान्तरप्रशस्तञ्च हविष्यं मन्वते बुधाः" ति० त० ब्रह्मवैवर्तसंहिता।

**हविष्यान्न** न० कर्म०। "हैमन्तिकं सिताऽस्विन्नं धान्यं मुद्गास्तिला यवाः। कलायकङ्गुनीवारा वास्तूकं हिलमोचिका। षष्टिका कालशाकञ्च मूलकं केमुकेतरत्। लवणे सैन्धवसामुद्रे गव्ये च दधिसर्पिषी। पयोऽनुद्धृतसारञ्च पनसाम्रहरीतकी। तिन्तिडी जीरकञ्चैव नागरङ्गञ्च पिप्पली। कदली लवली धात्री फलान्यगुडमैक्षवम्। अतैलपक्वं मुनयो हविष्यान्नं प्रचक्षते" इत्युक्ते व्रतादौ भक्ष्यद्रव्यभेदे।

**हविस्** न० हूयते हु-कर्मणि असुन्। १घृते अमरः २हवनीयद्रव्यमात्रे च "वपाया मेदसो हविषोऽनुब्रूहीति" श्रुतिः। "सुन्नान्नानि पयः सोमो मांसं यच्चानुपस्कृतम्। अक्षारलवणञ्चैव प्रकृत्या हविरुच्यते" स्मा० त० उक्ते ३द्रव्यभेदे। भावे असुन्। ४होमे।

**हव्य** न०हु-कर्मणि यत्। १देवयोग्यान्ने अमरः। २हवनीयद्रव्ये त्रि०। भावे यत्। ३होमे न०।

**हव्यपाक** पु० हव्याय होमाय पाको यत्र। होमार्थं दुग्धघृतादिमिश्रिते सिद्धे अन्ने चरौ अमरः।

**हव्यवाह** पु०हव्यं वहति देवान् वह-अण्।१अग्नौ रत्नमा० २चित्रकवृक्षे च। [अमरः। २चित्रकवृक्षे च।

**हव्यवाहन** पु० हव्यं वाहयति वह-णिच्-ल्यु। १वह्नौ

**हव्याश** पु० हव्यमश्नाति अश-अण्। १वह्नौ शब्दर० २चित्रकवृक्षे। ल्यु। हव्याशनोऽप्यत्र पु०हेमच०।

**हस** हासे भ्वा० प० अक० सेट् एदित्। णिचि न वृद्धिः। हसति अहसीत्। दोषदर्शनपूर्वकहासे तु सकर्मकः "स्मितावहस्येव पुरं मघोनः" इति भट्टिः। [अमरः।

**ह(हा)स** पु० हस-अप् घञ् वा। हास्ये मुखविकाशनभेदे

**हसन** न०हस-भावे ल्युट्। ओष्ठमुखकपोलादेर्विकाशने हास्ये

**हसन्ती** स्त्री हस-श ङीप्। अङ्गारधानिकायां अमरः। २मल्लिकाभेदे ३शाकिनीभेदे च मेदि०। हस-शतृ-ङीप्। हसत् ४हासिनि त्रि० स्त्रियाम् ङीप्।

**हसित** न० हस-भावे क्त। १हास्ये कर्त्तरि क्त। २कृतहास्ये ३विकसिते च त्रि०। हास्यशब्दे दृश्यम्।

**हस्त** पु० हस-तन् न इट्। १देहावयवभेदे (हात) अमरः। २चतुर्विंशत्यङ्गुलपरिमाणे "यवोदरैरङ्गुलमष्टसंख्यैर्हस्तोऽङ्गुलैः षड्गुणितैश्चतुर्भिः" लीला०। ३हस्तिशुण्डे च। ४अश्विन्यादिषु त्रयोदशे नक्षत्रे पुं स्त्री० मेदि० अस्य ना-शब्दे पु० टाप्रम्। "जाह्नवी हस्तयोगे" इति पुराणम्। "पुष्या हस्ता तथा स्वातिः" ज्यो०। केशवाचकात् परः। ५समूहे। केशहस्तः।

"हस्तदत्तास्तु ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्बिषम्। तस्मादन्तरितं कृत्वा पर्णेनाथ तृणेन वा। प्रदद्यात् न तु हस्तेन नायसेन कदाचन" स्मा० त०। [हस्ते राजनि०।

**हस्तजोड़ि** पु० हस्तं जुडति जुड़ इन्। (हातजोड़ा)

**हस्तपुच्छ** न०६त०। हस्तावयवभेदे (हातेर पोँछा)। त्रिका०

**हस्तवारण** न० ६त०। मारणोद्यतस्य निवारणे अमरः।

**हस्तबिम्ब** न० हस्तस्य बिम्बं यत्र। स्थासके चन्दनादिना देहविलेपनविशेषे हेमच०। [श्रीधरः।

**हस्तसिद्धि** स्त्री हस्तस्य तत्कर्मणः सिद्धिर्यतः। वेतने

**हस्तसूत्र** न० हस्तस्य सूत्रमिव। वलये हेमच०।

**हस्तामलक** न० हस्तस्थितमामलकम् आमलक्याः फलं तदिव वा। १करावस्थितामलकफले तद्वत् २अनायासलभ्ये पदार्थे च। करामलकादयोऽप्यत्र। ३वेदान्तप्रसिद्धग्रन्थभेदे च।

**हस्तिक** न० हस्तिनां समूहः कन्। हस्तिसमूहे शब्दर०।

**हस्तिकन्द** पु० हस्ती तत्पदमिव कन्दोऽस्य । स्वनामख्याते कन्दभेदे (हातिकाँदा) राजनि० ।

**हस्तिकरञ्ज** पु० हस्तीव महान् करञ्जः । महाकरञ्जे राजनि०

**हस्तिकर्ण** पु० हस्तिनः कर्ण इव पर्णमस्य अच् । १एरण्ड-वृक्षे २पलाशभेदे ३गणदेवताभेदे मेदि० । ४हस्तिकन्दे ५रक्तैरण्डे च राजनि० । स्वार्थे क तत्रार्थे । ६त० । ६गजस्य कर्णे । [अमरः ।

**हस्तिकर्णदल** पु० हस्तिनः कर्ण इव दलमस्य । पलाशभेदे

**हस्तिकोलि** पु० हस्तीव कोलिः । बदरीभेदे रत्नमा० ।

**हस्तिघोषा** स्त्री हस्तीव वृहती घोषा । वृहद्घोषायाम् मदनपालः । [घोषायाम् रत्नमा० ।

**हस्तिघोषातकी** स्त्री हस्तीव वृहती घोषातकी । हस्ति-

**हस्तिचारिणी** स्त्री हस्तीव चरति चर-णिनि ङीप् । महाकरञ्जे राजनि० ।

**हस्तिदन्त** पु० ६त० । १करिदन्ते । तदाकारोऽस्त्यस्य अच् । २मूलके न० राजनि० तत्रार्थे पु० शब्दर० । ३गृहभित्ति-निखाताग्रे काष्ठनिर्मितकीलिकाकारे पदार्थे नागदन्ता-दयोऽप्यत्र । [कर्कटीभेदे राजनि० ।

**हस्तिदन्तफला** स्त्री हस्तिदन्त इव फलमस्याः । एर्वारौ

**हस्तिन्** पु० हस्तः शुण्डादण्डोऽस्त्यस्य । १गजे २चन्द्रवंश्ये नृपभेदे च ।

"सुहोत्रस्यापि दायादो हस्ती नाम बभूव ह । तेनेदं निर्मितं पूर्वं पुरैव हस्तिनापुरम् । हस्तिनश्चैव दायादा-स्त्रयः परमधार्मिकाः । अजमीढो द्विमीढश्च पुरु... ढु-स्तथैव च" हरिवं० २० अ० ।

**हस्तिनख** पु० हस्तिनो नख इव हस्तिना न खन्यते नञ्+खन-ड वा । १पुरद्वारस्थे मृत्कूटे अमरः । २दुर्गद्वाराव-रोधनार्थं निम्नोन्नते खातोन्नते मृद्राशौ च भरतः ।

**हस्तिनापुर** न० हस्तिना तदाख्यनृपेण चिह्नितं तत्कृतत्वात् पुरम् अलुक्स० । (दिल्ली) पुरभेदे ।

**हस्तिनी** स्त्री हस्तिनः योषा ङीप् । १करिण्याम् गजयो-षिति चतुर्विधस्त्रीमध्ये २स्त्रीविशेषे तल्लक्षणं यथा "स्थूलाधरा स्थूलनितम्बभागा स्थूलाङ्गुली स्थूलकुचा सुशीला । कामोत्सुका गाढरतिप्रिया च नितम्बखर्वा खलु हस्तिनी स्यात्" "हये तुष्टा च हस्तिनी" रति-मञ्जरी । ३हट्टविलासिन्यां शब्दच० [स्वार्थे क तत्रैव ।

**हस्तिप** पु० हस्तिनं पाति पा-क । हस्त्यारोहे अमरः ।

**हस्तिपत्त्र** पु० हस्ती तत्कर्ण इव पत्त्रमस्य । हस्तिकन्दवृक्षे राजनि० । [हस्त्यम् । राजकोषातक्यां स राजनि० ।

**हस्तिपर्णिका** स्त्री हस्ती तत्कर्ण इव पर्णमस्याः कप् अत

**हस्तिपर्णी** स्त्री हस्ती तत्कर्ण इव पर्णमस्या ङीष् । १मोर-टालतायां रत्नमा० । २कर्कटशृङ्ग्यां राजनि० ।

**हस्तिमद** पु० ६त० । १करिकरनिःसृतमदजले । स इव । २गन्धद्रव्यभेदे च राजनि० ।

**हस्तिमल्ल** पु० हस्तिषु मल्लः । १ऐरावतगजे । २गणेशे ३शङ्खे ४नागे च मेदि० । [राजनि० ।

**हस्तिरोहणक** पु० हस्तीव रोहति ल्यु स्वार्थे क । महाकरञ्जे

**हस्तिलोध्रक** पु० हस्तीव लोध्रः स्वार्थे क । लोध्रभेदे राजनि०

**हस्तिविषाणी** स्त्री हस्तिविषाणं गजदन्तस्तदाकारः मध्य-भागः (थोड़) यस्याः गौरा० ङीष् । १कदल्याम राजनि० ।

**हस्तिशुण्डा(ण्डी)** स्त्री हस्तिशुण्डस्तदाकारोऽस्त्यस्याः अच् वा गौरा० ङीष् । (हातिशुड़ा) वृक्षे राजनि० ।

**हस्तिश्यामाक** पु० हस्तीव स्थूलः श्यामाकः । स्थूल-श्यामाके राजनि० । [हत्य हत्वा वा ।

**हस्ते** अव्य० हस्त+ए । १पाणौ इत्यर्थे २स्वीकारे च हस्ते-

**हस्त्य** त्रि० हस्तेन गृहीतः दत्तः कृतो वा यत् । १हस्तगृहीते २पाणिदत्ते ३पाणिकृते सि० कौ० ।

**हस्त्यध्यक्ष** पु० ७त० । गजाध्यक्षे गजरक्षणादौ नियुक्ते "हस्तिशिक्षाविधानाज्ञो वन्यजातिविशारदः । क्लेशक्षम-स्तथा राज्ञो गजाध्यक्षः प्रशस्यते" मत्स्यपु० १८९ अ० ।

**हस्त्यारोह** पु० हस्तिनमारोहति आ+रुह अण् । हस्ति-पके अमरः ।

**हस्न** त्रि० हस-कर्मणि र । मूर्खे उणा० । [शब्दच० ।

**हहल** अव्य० हेति हलति । हालाहले स्थावरविषभेदे

**हहा** पु० हेति शब्दं जहाति हा-क्विप् । गन्धर्वभेदे शब्दमा०

**हा** त्यागे जु० प० स० अनिट् । जहाति अहात् जहि अहासीत् हीयते ओदित् निष्ठातस्य नः हीनः हानिः ।

**हा** गतौ जु० आ० स० अनिट् ओदित् निष्ठातस्य नः । जि-हीते अहासिष्ट जहे हानम् ।

**हा** अव्य० हा-का । १विषादे २शोके ३पीडायाम् अमरः ४कुत्सायाञ्च मेदि० । हाशब्दस्य निन्दापरत्वे तद्योगे षष्ठ्यर्थे द्वितीया "हा लोकं कैशवद्विषम्" बोपदेवः । निन्दनीयपरत्वे न, "हा पितः ! कासि वैदेहि !" भट्टिः ।

**हाङ्गर** पुंस्त्री हा विषादाय पीडायै वा अङ्गं राति रा-क । स्वनामख्याते जलजन्तुभेदे शब्दच० स्त्रियां ङीष् ।

**हाटक** न० हट-ण्वुल् । १देशभेदे २तज्जे स्वर्णे तन्नाम-

नामके धुस्तुरे च अमरकोषः। ४स्वर्णनिर्मिते त्रिलिङ्गः।

**हाटकेश्वर** पु०गोदावरीतीरस्थे शिवलिङ्गभेदे यथा "एतास्मन्नन्तरे प्राप्ताः सर्व एवर्षिपार्थिवाः। द्रष्टुं त्रैलोक्यभर्त्तारं त्र्यम्बकं हाटकेश्वरम्। ततः कपिवरः प्राप्तो एताभ्या सह सुन्दरि!। स्नात्वा गोदावरीतीर्थे ददृशुर्हाटकेश्वरम्" वामनपु० ६२अ०।

**हात** न० हा-करणे त्तन्। वेतने सि० कौ०। पृषो०। हान्त। मरणे उणादि०। [कान्चन" भट्टिः।

**हान** न० हा-भावे त्त। परित्यागे"हिमहानकृता न कृता

**हानि** स्त्री हा-क्तिन् तस्य निः। १क्षतौ २अपचये च जटा०।

**हापुत्री** स्त्री हा इति रवः पुत्राय यस्याः ङीप्। पक्षिभेदे हारा०। स्वार्थे क ह्रस्वः। तत्रार्थे त्रिका०।

**हायन** पु० अब्दं जहाति हा-ल्यु-नि०। १ब्रीहौ भावं जहाति हा-ल्यु-नि०। २वत्सरे पुंस्त्री० अमरः। ३अग्निशिखायां स्त्री मेदि०।

**हार** पु० हृ-कर्मणि घञ्। १मुक्तामालाभेदे अमरः "हारो नारोपितः कण्ठे" इति सीतावाक्यम्। २युद्धे मेदि०। हरतीति कर्त्तरि घञ् ण वा। ३भाजके "अन्योन्यहाराभिहतौ हरांशौ" इति लीला०।

**हाफिका** स्त्री जृम्भायां (हाइतोला) हारा०।

**हारक** पु० हृ-ण्वुल्। १चौरे २कितवे ३गद्यभेदे ४विज्ञानभेदे मेदि०। ५शाखोटकभेदे शब्दच०। ६भाजकाङ्के च। ७हरणकर्त्तरि त्रि०। [कपिलद्राक्षायाम् राजनि०

**हारहारा** स्त्री हार इव हरति आस्वादनात् हृ-ण।

**हारहूरा** स्त्री हू-क्विप् हूः हार इव हूवं राति रा-क। १द्राक्षायाम् हला०। २मद्ये पु० मेदि०।

**हारावली** स्त्री हार इवावली। मुक्तावल्यां "शृङ्गारहारावली" इति शब्दार्णवः। २पुरुषोत्तमकृते कोषभेदे च।

**हारि(री)** स्त्री हृ-णिच्-इन् वा ङीप्। १द्यूतादिभङ्गे २तत्पराजये ३पथिकसमूहे च मेदि०। ङीबन्तः ४मुक्तावां स्त्री शब्दमा०। [कोकिले मेदि० स्त्रियां ङीप्।

**हारिकण्ठ** पुंस्त्री० हारी मनोहरः कण्ठस्तद्रवो यस्य।

**हारित** पुंस्त्री० हृ-णिच-क्त। हारीते पक्षिभेदे जटा०। स्त्रियां ङीप्। हरिदेव स्वार्थे अण्। हरिद्वर्णे पु०।

**हारितक** न०हारितेन हरिद्वर्णेन कायति कै-क। शाके शब्दर०

**हारिद्र** पु० हरिद्रया रक्तः अण्। १कदम्बवृक्षे तत्पुष्पस्य पीतप्रायत्वात् तथात्वम्। २हरिद्रया रक्ते त्रि०मेदि०।

**हारिन्** त्रि० हारोऽस्त्यस्य इनि हृ-णिनि वा। १हारके

२हारविशिष्टे ३मनोहारिणि च। "हारीयष्टबलानां हारीयष्टबलानाम्" भट्टिः। स्त्रियां ङीप्।

**हारिल** पुंस्त्री० हृ-णिच् इलच्। खनामख्याते खगभेदे राजनि० स्त्रियां जातित्वात् ङीष्।

**हारीत** पु० हृ-णिचबा०-ईतच्। स्मृतिकर्त्तरि मुनिभेदे। २पक्षिभेदे ३कितवे च मेदि०। स्वार्थे क। हारिलखगे (हरेल) राजनि०।

**हार्द्द** न० हृदयस्य कर्म युवा० अण् हृदादेशः। १स्नेहे २प्रेमणि अमरः। हृदि भवः विदितो वा अण्। ३हृदयस्थे ४हृदयवेद्ये च त्रि० हार्दविद्या शा०भा०।

**हार्य्य** पु० ह्रियतेऽसौ हृ-ण्यत्। १विभीतकवृक्षे २हरणीये त्रि० मेदि०।

**हाल** पु० हलोऽस्त्यस्य अण् हल एव वा अण्। १बलरामे त्रिका०। २हले च मेदि०। ३शालिवाहननृपे हेमच०।

**हालक** पु०हाल+संज्ञायां कन्। पीतहरितवर्णाश्वे हेमच०।

**हालह(हा)ल** न०हलाहल पृषो०। हालाहलविषे शब्दर०

**हाला** स्त्री हल-घञ्। १मद्ये अमरः २तालरसजे (ताड़) मद्ये च राजनि०।

**हालाहल** पुंन०हालेव हलति हल-अच्। १स्थावरविषभेदे शब्दर०। २कीटभेदे च पु० राजनि०। ३मद्ये स्त्री तत्र ङीप् राजनि०। "गोस्तनाभफलो गुच्छस्तालपत्रच्छदस्तथा। तेजसा यस्य दह्यन्ते समीपस्था द्रुमादयः। असौ हालाहलो ज्ञेयः किष्किन्धायां हिमालये। दक्षिणाब्धितटे देशे कोङ्कणेऽपि च जायते" भावप्र०।

**हालिक** त्रि० हलेन खनति हलः प्रहरणमस्य तद्वेदं वा ठक ठञ् वा। १हलकर्षके २हलेन योद्धरि ३हलसम्बन्धिनि च अमरः।

**हालिनी** स्त्री हल-णिनि ङीप्। स्थूलपत्र्यां हेमच०।

**हाली** स्त्री हल-इण् ङीप्। कनिष्ठायां श्यालिकायाम् हेमच०।

**हालु** पु० हल-उण्। दन्ते त्रिका०।

**हाव** पु० हू-भावे घञ् नि०सम्प्र०हु-करणे घञ्। १आह्वाने २स्त्रीणां शृङ्गारभावजे चेष्टाभेदे च अमरः। "युवा-लोऽनेन हूयन्ते नारीभिर्मदनालये। अतो निरुच्यते हावस्ते विलासादयो मताः" भरतधृतवाक्यम्। "ग्रीवा-रेचकसंयुक्तो भ्रूनेत्रादिविकाशकृत्। भावादीषत्प्रकाशो यः स हाव इति कथ्यते" उज्ज्वलमणिः।

**हास** पु०हस-भावे घञ्। हास्यस्थायिभावके रसभेदे तल्लक्षणं

सा० द०"विकृताकारवाग्वेशचेष्टादेः कुहकाद्भवेत् । हासो हास्यस्थायिभावः श्वेतः प्रमथदैवतः । विकृताकारवाक्चेष्टं यदालोक्य हसेज्जनः । तदत्रालम्बनं प्राहुस्तच्चेष्टोद्दीपनं मतम् । अनुभावोऽक्षिसङ्कोचवदनस्मेरतादिकः । निद्रालस्यावहित्थाद्या अत्र स्युर्व्यभिचारिणः"।

**हासस्** पु० हस-णिच् असुन् । चन्द्रे वेदनि० ।

**हासिका** स्त्री हस-भावे ण्वुल् । हास्ये हेमच० ।

**हास्तिक** न० हस्तिनां समूहः वुञ् ।१हस्तिसमूहे अमरः । हस्तिनमारोहति ठक् । २हस्त्यारोहे ।

**हास्तिन** न० हस्तिना न्टपेण निर्वृत्तम् नगरम् अण् संयोगपरत्वादिनो नटिलोपः । हस्तिनापुरे त्रिका० । हास्तिना इदं हस्तिनः परिमाणं वा अण् । २हस्तिसम्बन्धिनि ३हस्तिपरिमाणे च त्रि० ।

**हास्य** न० हस-ण्यत् । १हासे हसने अमरः २अलङ्कारोक्ते रसभेदे च । "अकस्मं हसितं श्रेष्ठं मौलितास्य मचापहम् । असङ्कहसितं दुष्येत् तत् सोन्मादस्य कैकधा" गारुडे ६६अ० ।

"ज्येष्ठानां स्मितहसिते मध्यानां विहसितावहसिते च नीचानामपहसितं तथाऽतिहसितस्य षड्भेदाः"। "ईषद्विकासि नयनं स्मितं स्यात् स्पन्दिताधरम् । किञ्चिल्लक्ष्यद्विजं तत्र हसितं कथितं बुधैः । मधुरस्वरं विहसितमांसशिरःकम्पमवहसितम् । अपहसितं साम्राक्षं विक्षिप्ताङ्गं भवत्यतिहसितम्" सा० द० ।

**हाहा** पु०हेति शब्दं जहाति क्विप् ।१देवगन्धर्वभेदे अमरः । असुन् हाहस् शब्दोऽपि तत्रार्थे भरतः । हा-हित्वम् २विस्मयशब्दे ३शोकशब्दे च अव्य० मेदि० ।

**हाहाकार** पु०हाहा इत्यस्य कारः कृ-भावे घञ् ।१युद्धशब्दे २शोकध्वनौ च । [शिखाय ।

**हि** वर्द्धने गतौ च स्वा०पर०सक०अनिट् । हिनोति अहैषीत्

**हि** अव्य० हा-हि-वा डि । १हेतौ २अवधारणे अमरः । ३विशेषे ४प्रश्ने ५सम्भ्रमे ६हेत्वपदेशे ७असूयायां च मेदि० ८पादपूरणे ९शोके च शब्दर० ।

**हिंसक** पु० हिन्स-ण्वुल् । १व्याघ्रादौ हिंस्रे पशौ २शत्रौ च ३आथर्वणे विप्रे ४हिंसाकारके त्रि० शब्दर० । "भोक्तानुमन्ता संस्कर्ता क्रयिविक्रयिहिंसकाः । उपहर्त्ता घातयिता हिंसकाश्चाष्टधा मताः" काशीख० ।

**हिंसा** स्त्री हिन्स-अ । १वधे मेदि० । २चौर्यादिकर्मणि च अमरः । "हिंसा चैव न कर्त्तव्या वैधहिंसा तु राजसी। ब्राह्मणैः सा न कर्त्तव्या यतस्ते सात्त्विका मताः" इत्युक्तेः । वैधहिंसाशब्दे ४९७५ पृ० दृश्यम् ।

**हिंसारु** पु० हिन्स-आरु । व्याघ्रे त्रिका० ।

**हिंसालु** पु० हिंसा+अस्त्यर्थे आलु । १हिंसाशीले उणा० । २कुक्कुरे पु० हारा० ।

**हिंसीर** पु० हिंसा-ईरन् । १व्याघ्रे २खगे च उणा० ।

**हिंस्र** त्रि० हिन्स-र । १हिंसाशीले अमरः । २घोरे ३भये ४भीमसेने ५क्रूरे पु०उणा० । ६मांस्यां ७काकादन्यां ८जटामांस्याम् ९एलवालुकायां १०गवेधुकायां ११सिरायाम् १२नाड्यां च स्त्री शब्दच० । [अहिक्किष्ट ।

**हिक्क** कूजने भ्वा० उ०अ० सेट् । हिक्कति ते अहिक्कीत्

**हिक्क** हिंसायां चु०आ०सक० सेट् । हिक्कयते अजिहिक्कत ।

**हिक्का** स्त्री हिगिति शब्दं करोतीति पृषो०। रोगभेदे (हेचकी) अमरः ।

तन्निदानादिकं भावप्र० उक्तं यथा

"अथ हिक्काधिकारः । तत्र हिक्कायाः विप्रकृष्टं निदानमाह "विदाहिगुरुविष्टम्भिरूक्षाभिष्यन्दिभोजनैः । शीतपानाशनस्नानरजोधूमातपानिलैः । व्यायामकर्मभाराध्ववेगाघातापतर्पणैः । हिक्का श्वासश्च कासश्च नृणां समुपजायते" । अपतर्पणमनशनादि । संप्राप्तिमाह "वायुः कफेनानुगतः पञ्च हिक्काः करोति हि । अन्नजां यमलां क्षुद्रां गम्भीरां महतीं तथा" । सामान्यलक्षणमाह "मुहुर्मुहुर्वायुरुदेति सस्वनः यकृत्प्लिहान्त्राणि मुखादिवाक्षिपन् । सघोषवानाशु हिनस्त्यसून्यतस्ततस्तु हिक्केत्यभिधीयते बुधैः"। वायुरत्र सोदानः प्राणो बोद्धव्यः । उदेति ऊर्द्धं याति । सस्वनः शब्दवान् । ऊर्द्धगमनं विशिनष्टि यकृदित्यादि प्लिह इति शब्दोऽप्यस्ति दीर्घत्वविकल्पात् । मुखादिति ल्यब्लोपे पञ्चमी तेन यकृत्प्लीहान्त्राणि मुखमानीय आक्षिपन् निःसारयन् इवेत्यर्थः । वायुः दोषवान् दोषोऽत्र कफः तद्वान् वायुः कफेनानुगत इति सम्प्राप्तिः । हिनस्तीति हिक्का पृषोदरादित्वाद्रूपसिद्धिः हिगिति शब्दं करोतीति वा । पूर्वरूपमाह "कण्ठोरसोर्गुरुत्वञ्च वदनस्य कषायता । हिक्कानां पूर्वरूपाणि कुक्षेराटोप एव च" । वदनस्य कषायता वातात् । अन्नजालक्षणमाह "पानान्नैरतिसंयुक्तैः सहसा पीडितोऽनिलः । हिक्कयत्यूर्द्धगो भूत्वा तां विद्यादन्नजां भिषक्" अनिलः प्राणो वायुः । यमलालक्षणमाह "चिरेण यम-

लैर्वेगैर्या हिक्का सम्प्रवर्त्तते। कम्पयन्ती शिरोग्रीवां यमलां तां विनिर्दिशेत्"। क्षुद्रामाह "विकृष्टकालैर्या वेगैर्मन्दैः समभिवर्त्तते। क्षुद्रिका नाम सा हिक्का जत्रुमूलं प्रधावति"। विकृष्टकालैः चिरेण। जत्रुः कक्षो रसोः सन्धिः। गम्भीरामाह "नाभिप्रवृत्ता या हिक्का घोरा गम्भीरनादिनी। अनेकोपद्रववती गम्भीरा नाम सा स्मृता"। अनेकोपद्रववती तृष्णाज्वरादियुक्ता। महतीमाह "मर्माणि पीड़यन्तीव सततं या प्रवर्त्तते। महाहिक्केति सा ज्ञेया सर्वगात्रप्रकम्पिनी"। मर्माणि वस्तिहृदयशिरःप्रभृतीनि। असाध्यत्वमाह "आयम्यते हिक्कितो यस्य देहो दृष्टिश्चोर्द्ध्वं ताम्यते नित्यमेव। क्षीणोऽन्नद्विट् क्षौति यश्चातिमात्रं तौ द्वौ चान्त्यौ वर्जयेद्धिक्कमानौ। आयम्यते विस्तार्य्यत इव तौ द्वाविति आयस्यत इत्यादिना नित्यमेवेत्यन्तेनैको हिक्कमानः। क्षीण इत्यादिनाऽतिमात्रमित्यन्तेनापरः। तौ द्वौ चान्त्यौ च गम्भीरया महतीहिक्कया हिक्कमानौ वर्जयेत्। अपरञ्च "अतिसञ्चितदोषस्य भक्तच्छेदकृशस्य च। व्याधिभिः क्षीणदेहस्य वृद्धस्यातिव्यवायिनः। आसां या सा समुत्पन्ना हिक्का हन्त्याशु जीवितम्। यमिका च प्रलापार्त्तिमोहतृष्णासमन्विता"। साध्यत्वमाह "अक्षीणश्चाप्यदीनस्य स्थिरधात्विन्द्रियस्य च। तस्य साधयितुं शक्या यमिका हन्त्यतोऽन्यथा"।

**हिङ्गु** न० हिमं गच्छति गम–डु नि०। (हिङ्) रामठदेशोद्भवे वृक्षे अमरः यस्य निर्यासो हिङ्गुद्रव्यम्। "हिङ्गूष्णं पाचनं रुच्यं तीक्ष्णं वातबलासहृत्। रसे पाके च कटुकं स्निग्धञ्च वह्निदीपनम्। शूलगुल्मोदरानाहकृमिघ्नं पित्तवर्द्धनम्" भावप्र०। "हिङ्गु तीक्ष्णं कटुरसं शूलाजीर्णविबन्धनुत्। लघूष्णं पाचनं स्निग्धं दीपनं कफवातजित्" राजव०। २वंशपत्रे भावप्र०

**हिङ्गुनाड़िका** स्त्री हिङ्गुन नाड़ी इव नाड़ी यस्याः कप्। नाडीहिङ्गौ राजनि०।

**हिङ्गुनिर्यास** पु० हिङ्गुन इव निर्यासोऽस्य। १निम्बवृक्षे अमरः ६त०। २हिङ्गुवृक्षनिर्यासे च (हिङ्)।

**हिङ्गुपत्र** पु० हिङ्गुन इव पत्त्रमस्य। १इङ्गुदीवृक्षे राजनि० (हिङ्पात) २वृक्षभेदे स्त्री ङीप् भरतः।

**हिङ्गुपर्णी** हिङ्गुन इव पर्णमस्याः गौरा० ङीष्। वंशपत्राम् रत्नमाला।

**हिङ्गुल** पुंन० हिङ्गु तद्वद्वर्णं लाति ला–क। रक्तवर्णे वर्णकद्रव्यभेदे अमरः २वार्त्ताक्यां ३इङ्गुद्यांच स्त्री ङीष्। वर्णकभेदे तस्य शोधनादिकं भावप्र० उक्तं यथा "मेषीक्षीरेण दरदमम्लवर्गैश्च भावितम्। सप्त वारान् प्रयत्नेन शुद्धिमायाति निश्चितम्"। एवं शोधितस्य हिङ्गुलस्य गुणाः। "तिक्तं कषायं कटु हिङ्गुलं स्यान्नेत्रामयघ्नं कफपित्तहारि। हृल्लासकुष्ठज्वरकामलांश्च प्लीहामवातौ च गरं निहन्ति"। अथ हिङ्गुलात्पारदाकर्षणविधिः "निम्बूरसैर्निम्बपत्ररसैर्वा याममात्रकम्। दृष्टा दरदमूर्द्ध्वन्तु पातयेत् सूतयुक्तिवत्। ततोर्द्धपिठरीलग्नं स्वच्छीयाद्रसमुत्तमम्। शुद्धमेव हितं सूतं सर्वकर्मसु योजयेत्"। तल्लक्षणं दरदशब्दे ३४७१पृ० दृश्यम्। सतीदेहब्रह्मरन्ध्रपातस्थाने ४देशविशेषे स्त्री (हिङ्लाट्) "ब्रह्मरन्ध्रं हिङ्गुलायां देवता भीमलोचना। कोटवी सा महामाया त्रिगुणा या दिगम्बरी" पीठमा०।

**हिङ्गुलु** पुंन० हिङ्गु तद्वर्णं लाति ला–डु। (हिङ्गुल) वर्णकद्रव्ये अमरः।

**हिङ्गुसिराटिका** स्त्री हिङ्गुन इव सिरां पत्त्रसिरामटति अट–ण्वुल् अत इत्त्वम्। वंशपत्त्राम् रत्नमा०।

**हिङ्गूल** न० हिङ्गुल+पृषो०। मधुरमूले (आलु) शब्दच०।

**हिज्ज** पु० हिनोति हि–क्विप् तथा सन् जायते जन–ड कर्म०। हिज्जलवृक्षे शब्दर०। [भेदे (हिजल) जटा०

**हिज्जल** पु० हि–क्विप् हिः हितकारि जलं यस्य। वृक्ष-

**हिज्जीर** पु० हस्तिपादबन्धे हेमच०। [अधिविशेष।

**हिड** गतौ भ्वा० आ० सक० सेट् इदित्। हिण्डते

**हिडिम्ब** पु० १राक्षसभेदे स हि भीमेन हतः २तद्भगिन्यां स्त्री

**हिडिम्बजित्** हिडिम्बं राक्षसभेदं जितवान् जि–क्विप्। भीमसेने हिडिम्बशत्रु प्रभृतयोऽप्यत्र। [भार० आ०।

**हिडिम्बापति** पु० ६त०। १हनुमति शब्दर० २भीमसेने

**हिण्डन** न० हिडि–ल्युट्। १भ्रमणे २रमणे मेदि०। ३लेखने च विश्वः। [चार्य्ये हारा०

**हिण्डिक** पु० हिडि–इन् हिण्डिं कायति कै–क। ज्योतिषा-

**हिण्डि(ण्डी)र** पु० हिडि–इरन् ईरन् वा। १समुद्रफेने अमरः। २वार्त्ताकौ ३पुरुषे मेदि० ४रुचके च उणा०।

**हिण्डी** स्त्री हिडि–इन् ङीप्। दुर्गायां त्रिका०।

**हिण्डीप्रियतम** पु० ६त०। शिवे शब्दर० हिण्डीपत्या-दयोऽप्यत्र। [४मङ्गले च।

**हित** त्रि० धा–क्त हि–क्त वा। १गते २पथ्ये ३इष्टसाधने

**हितक** पु० हित+स्वार्थे क। शिशौ राजनि०।

**हितकारिन्** त्रि० हितं करोति कृ-णिनि । शुभकारके ।

**हितप्रणी** पु० हितं प्रणयति प्र+णी क्विप् । चारे शब्दर० ।

**हितावली** स्त्री हितम् आवलयति आ+वल-इन् ङीप् । ओषधिभेदे अमरः । [कारिणि स्त्रियां ङीप् ।

**हितैषिन्** त्रि० हितमिच्छति इष-णिनि । हितेच्छा-

**हितोपदेश** पु० हितस्य इष्टसाधनस्य उपदेशः । १हितस्य उपदेशे विष्णुशर्म्मकृते २नीतिग्रन्थभेदे च ।

**हिन्ताल** पु० हीनस्तालो यस्मात् पृषो० । (हेँताल) वृक्षे अमरः "हिन्तालो मधुराम्लश्च कफकृत् पित्तदाहनुत् । श्रमतृष्णापहारी च शिशिरो वातदोषकृत्" राजनि० ।

**हिन्दोल** पु० हिल्लोल+घञ् पृषो० । १श्रावणशुक्लपक्ष-विहिते दोलनयन्त्रेण भगवतो दोलनरूपे २उत्सवभेदे ३रागभेदे च सङ्गीतदा० । ४दोलायां स्त्री स्वार्थे क । यानभेदे जटा० ।

**हिन्दु** पु० हीनं दूषयति दुष+डु पृषो० । जातिभेदे । "पश्चिमाम्नायमन्त्रास्तु प्रोक्ताः पारस्यभाषया । अष्टो-त्तरशताशीतिर्येषां संसाधनात् कलौ । पञ्च खानाः सप्त-मीरा नव शाहा महाबलाः । हिन्दुधर्म्मप्रलोप्तारो जा-यन्ते चक्रवर्त्तिनः । हीनञ्च दूषयत्येव हिन्दुरित्युच्यते प्रिये ! । पूर्वाम्नाये नवशतं षडशीतिः प्रकीर्त्तिताः । फिरिङ्गभाषया मन्त्रास्तेषां संसाधनात् कलौ । अधिपा मण्डलानाञ्च संग्रामेष्वपराजिताः । इंरेजा नवषट् पञ्च लण्ड्जाश्चापि भाविनः" मेरुतन्त्रे २३प्र० । अग्रम [illegible] मिदम् ।

**हिम** न० हि-मक् । १आकाशच्युते जलकणे २शीतलस्पर्शे ३तद्वति त्रि० अमरः । ४सूक्ष्मैलायां ५रेणुकायां ६भद्र-मुस्तायाम् ७नागरमुस्तायां ८पृक्कायां ९चर्म्मिकायां च स्त्री राजनि० । १०अयहायणपौषमासात्मके ऋतुभेदे ११चन्दनवृक्षे पु० हेमच० १२कर्पूरे पु० राजनि० ।

**हिमक** पु० हिमेन कायति कै-क । विकङ्कतवृक्षे राजनि० ।

**हिमकर** पु० हिमः करः किरणो यस्य हिमं करोति निषेचनात् कृ-अच् वा । १चन्द्रे २कर्पूरे च राजनि० । हिमकिरणादयोऽप्यत्र ।

**हिमकूट** पु० हिमस्य कूटं यत्र । १शिशिरर्त्तौ राजनि० हिमप्रचुरं कूटमस्य । २हिमगिरौ हिमालयपर्वते ।

**हिमगिरि** पु० हिममयो गिरिः हिमप्रधानो वा गिरिः । हिमालयपर्वते हिमपर्वतादयोऽप्यत्र ।

**हिमज** पु० हिमात् हिमालयात् जायते जन-ड । १मैनाक-पर्वते । २पार्वत्यां ३शठ्यां स्त्री मेदि० । हिमे हिमकाले जायते जन-ड । ४क्षीरिण्यां लतायां स्त्री राजनि० ।

**हिमझटि** पु० झटि इन् ६त० । कुज्झटौ हारा० ।

**हिमतैल** पु० हिमवीर्य्यं तैलम् । कर्पूरजाते तैले राजनि० ।

**हिमदुग्धा** स्त्री हिमवीर्य्यकरं दुग्धमस्याः । क्षीरिण्याम् राजनि० ।

**हिमदुर्द्दिन** न० हिमहेतुकं दुर्द्दिनम् शाक० । हिमपातेन दुःखकरे दिने कुज्झटिकायुक्तदिने त्रिका० । [राजनि०

**हिमद्रुम** पु० हिमप्रधाने जायमानः द्रुमः । निम्बवृक्षे

**हिमप्रस्थ** पु० हिमः शीतलः प्रस्थो यस्य । हिमालयपर्वते हेमच० । [राजनि० ।

**हिमबालुक** पु० हिममयो बालुकेव अंशो यस्य । कर्पूरे

**हिमबालुका** स्त्री हिमस्य बालुकेव । कर्पूरे अमरः ।

**हिमवत्** पु० हिमानि प्राचुर्य्येण सन्त्यस्य मतुप् मस्य वः । हिमालयपर्वते हेमच० ।

**हिमवत्सुत** पु० ६त० । १मैनाकपर्वते २गङ्गायाम् ३उमा-याञ्च स्त्री । "गङ्गा हिमवतो जज्ञे सर्वलोकैकपावनी । स योगाग्निबलाद्देवीं लेभे पुत्रीं महेश्वरीम्" देवीपु०१२अ० ।

**हिमशर्करा** पु० हिमप्रधाना शर्करा शा०त० । यावनाले राजनि० ।

**हिमशैल** पु० हिमप्रधानः शैलः । हिमाचले ।

**हिमशैलजा** स्त्री हिमशैलाज्जायते जन-ड । १उमायां शब्दर० २गङ्गायाम् । [(बरफ) पदार्थे च अमरः ।

**हिमसंहति** स्त्री ६त० । १हिमसमूहे २हिमेन जलसङ्घाते

**हिमहासक** पु० हिमं हसति शीतवीर्य्यत्वात् हस-ण्वुल् । हिन्तालवृक्षे जटा० । [राजनि० ।

**हिमांशु** पु० हिमा अंशवोऽस्य । १चन्द्रे अमरः २कर्पूरे च

**हिमांशुशिख** न० हिमांशोरिवाशिखा शोभा यस्य । रौप्ये हेमच० । तस्य अतिशुभ्रत्वात् तथात्वम् ।

**हिमागम** पु० हिमस्यागमो यत्र । हेमन्ते अग्रहा-यणपौषमासात्मके ऋतौ राजनि० ।

**हिमाद्रिजा** स्त्री हिमाद्रौ हिमाद्रेर्वा जायते जन-ड । १क्षीरिण्यां राजनि० । २पार्वत्यां ३गङ्गायाञ्च ।

**हिमाद्रितनया** स्त्री ६त० । १दुर्गायां २गङ्गायाञ्च हि-माद्रिसुतादयोऽप्यत्र । ३मैनाके पु० ।

**हिमानी** स्त्री हिमानां संहतिः हिम+ङीप् आनुक् च । हिमसमूहे अमरः "आगता वत जरेव हिमानी" उद्भट ः

**हिमाराति** पु० ६त० । १सूर्य्ये २वह्नौ मेदि० ३अर्कवृक्षे ४चित्रकवृक्षे च ।

**हिमालय** पु० हिमानामालयः। १हिमवत्पर्वते त्रिका०। हिमप्रधान आलयो यस्य। २शुक्लखदिरे शब्दच०। ३भूम्यामलक्याञ्च स्त्री राजनि०। स च नगः भारतवर्षस्य सीमापर्वतः। जम्बुद्वीपशब्दे दृश्यम्। [राजनि०।

**हिमाब्ज** न० हिमकाले अप्सु-जायते जन-ड। उत्पले

**हिमावती** स्त्री हिमं हिमवीर्य्यं विद्यतेऽस्य सेवने मतुप् मस्य वः संज्ञायां दीर्घः। स्वर्णक्षीर्य्याम् अमरः।

**हिमाश्रया** स्त्री हिमं हिमवीर्य्यमाश्रयति आ+श्रि-अच्। स्वर्णजीवन्त्याम् राजनि०। [कपिलद्राक्षायाम् राजनि०।

**हिमोत्तरा** स्त्री हिममुत्तरं यस्याः सेवने शीतवीर्य्यकरत्वात्।

**हिमोत्पन्ना** स्त्री हिमे उत्पन्ना। यावनाल्यां राजनि०।

**हिमोद्भवा** स्त्री हिमे तत्प्रधानस्थाने उद्भवति उद्-भू-अच्। शट्याम् राजनि०। [मेदि०।

**हिरण** न० हृ-ल्युट् नि०। १रेतसि २स्वर्णे ३वराटके च

**हिरण्मय** त्रि० हिरण्यात्मकम् मयट् नि०। १हिरण्यात्मके स्त्रियां ङीप्। "हिरण्मयी शाललतेव जङ्गमा" भट्टिः। जम्बुद्वीपे नववर्षमध्ये २वर्षभेदे न० त्रिका०। "उत्तरेणेलावृतं नीलः श्वेतः शृङ्गवान् इति त्रयो रम्यकहिरण्मयकुरूणां वर्षाणां मर्य्यादागिरयः प्रागायता उभयतः क्षारोदावधयो द्विसहस्रयोजन पृथव एकैकशः पूर्वस्मात् पूर्वस्मादुत्तरोत्तरं दशांशाधिकांशेन दैर्घ्य एव ह्रसन्ति" भाग० ५।१६ अ०।

**हिरण्य** न० हिरणमेव स्वार्थे यत्। १सुवर्णे २धुस्तूरे अमरः। ३रेतसि शब्दर०। ४द्रव्ये ५वराटके ६अक्षये ७मानभेदे ८अकुप्ये मेदि० ९रजते १०धने च।

**हिरण्यकशिपु** पु० दैत्यविशेषे। स तु कश्यपात् दित्यां जातः "दित्याः पुत्रद्वयं जज्ञे कश्यपादिति नः श्रुतम्। हिरण्याक्षश्च दुर्द्धर्षो हिरण्यकशिपुस्तथा" "हिरण्यकशिपुर्दैत्यश्चचार परमं तपः। ततो वर्षसहस्राणि निराहारो ह्यधःशिराः। तं ब्रह्मा छन्दयामास दैत्यं तुष्टो वरेण तु। सर्वामरत्वं वव्रे स शस्त्रास्त्रैर्न दिवा निशम्। अहं सर्वं विनिर्जित्य सर्वदेवत्वमास्थितः। अणिमादिगुणैश्वर्य्यमेष मे दीयतां वरः। तेनैवमुक्तो ब्रह्मा तु तस्मै दत्त्वा यथेप्सितम्। दत्त्वा चास्य सभां दिव्यां तत्रैवान्तरधीयत। हिरण्यकशिपुर्दैत्यः श्लोकैर्गीतः पुरातनः। राजा हिरण्यकशिपुर्दैत्यो यां यां निषेवते। तस्यां तस्यां नमश्चक्रुर्देवता ऋषिभिः सह। एवंप्रभावो दैत्योऽभूत् हिरण्यकशिपुः पुरा। स्वयमग्निश्च चन्द्रश्च वायुरिन्द्रो जलं स्वयम्। भूत्वा चकार राज्यं स मन्वन्तरचतुर्दश। तस्यासीत् नरसिंहस्तु मृत्युर्विष्णुः पुरा किल। नखैस्तेन विनिर्भिन्नो नार्द्रशुष्का नखाः स्मृताः" वह्निपु०।

**हिरण्यकशिपुहन्** पु० हन-क्विप् ६त०। विष्णौ।

**हिरण्यकामधेनु** स्त्री विधानेन हिरण्यैरचिता कामधेनुः। तुलादिषोड़शमहादानमध्ये दानार्थं हिरण्येन कल्पितायाम् १धेनौ उपचारात् २तद्दाने च। तद्दानविधिः "अथातः संप्रवक्ष्यामि कामधेनुविधिं परम्। सर्वकामप्रदं नॄणां महापातकनाशनम्। लोकेशावाहनं तद्वद्धोमः कार्य्योऽधिवासनम्। तुलापुरुषवत् कुर्य्यात् कुण्डमण्डपवेदिकाः। स्वल्पेष्वेकाग्निवत् कुर्य्यात् गुरुरेव समाहितः"। कुण्डमण्डपवेदिका इत्युपलक्षणम्। इह हि देशकालशुद्धिस्वाद्ध्यायादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनपञ्चवर्णवितानतोरणपताकादिकं सर्वं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम्। स्वल्पेष्वेकाग्निवदिति, एकाग्निवत्करणं व्याख्यातम्। "काञ्चनस्यातिशुद्धस्य धेनुं वत्सञ्च कारयेत्। उत्तमा पलसाहस्रैस्तदर्द्धेन तु मध्यमा। कनीयसी तदर्द्धेन कामधेनुः प्रकीर्त्तिता। शक्तितस्त्रिपलादूर्द्ध्वमशक्तोऽपीह कारयेत्"। अत्र यद्यपि वत्सपरिमाणमनुक्तं तथापि कामधेनुविधानवत् तत्काञ्चनचतुर्थांशेन वत्सः कल्पनीयः। समस्तधेनुपरिमितद्रव्यनिष्कृष्टवत्सनिर्माणस्याप्रदर्शनादिहापि धेनुदानत्वाविशेषात् तथैव निर्णीयते। तथा च गुड़धेन्वादिषु "तच्चतुर्थांशेन वत्सः स्यादिति" तत्र तत्र वक्ष्यते। "वेद्यां कृष्णाजिनं न्यस्य गुड़प्रस्थसमन्वितम्। न्यसेदुपरि तां धेनुं महारत्नैरलङ्कृताम्। कुम्भाष्टकसमोपेतां नानाफलसमन्विताम्"। कल्पतरुदाने, प्रस्थो व्याख्यातः। "महारत्नानि पद्मरागप्रभृतीनि, "वत्सं दत्ते तु विन्यसेदिति" क्वचित्पाठः, नानाफलानि गोगजवाजिस्त्रीपुरुषप्रभृतीनि सौवर्णानि कल्पतरुदानोक्तानि। "तथाष्टादश धान्यानि समन्तात् परिकल्पयेत्। इक्षुदण्डाष्टकं तद्वन्नानाफलसमन्वितम्। भाजनं चासनं तद्वत् ताम्रदोहनकं तथा"। अष्टादश धान्यानि परिभाषायां द्रष्टव्यानि नानाफलानि मातुलिङ्गादीनि। "कौशेयवस्त्रद्वयसम्प्रयुक्ताम् दीपातपत्राभरणाभिरामाम्। सचामरां कुण्डलिनीं सघण्टां गात्रालिकापादुकरौप्यपादाम्।

रसैश्च सर्वैः परितोऽभिजुष्टां हरिद्रया पुष्पफलैरनेकैः । अजाजिकुस्तुम्बुरुशर्कराभिः वितानकं चोपरि पञ्चवर्णम् । स्नातस्ततो मङ्गलवेदघोषैः प्रदक्षिणीकृत्य सपुष्पहस्तः । आवाहयेत् ताङ्गुडधेनुमन्त्रैः द्विजाय दद्यादथ दर्भपाणिः” हेमा० दा०मत्स्यपु० । [हेमच० ।

**हिरण्यकोष** पु० हिरण्यस्य कोष इव । कृताकृतस्वर्णरौप्ये

**हिरण्यगर्भ** पु० हिरण्यं स्वर्णमयाण्डं गर्भं उत्पत्तिस्थानमस्य । १चतुर्मुखे ब्रह्मणि तस्य हैमाण्डप्रभवत्वात्तथात्वम् “तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः” मनूक्तेः । तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना कल्पिते २हिरण्यगर्भाख्ये पात्रे ३उपचारात्तद्दाने ४शालग्राममूर्त्तिभेदे च शालग्रामशब्दे दृश्यम् । तस्य दानविधिश्च हेमा०दा०मत्स्यपु० “अथातः संप्रवक्ष्यामि महादानमनुत्तमम् । हेम्ना हिरण्यगर्भाख्यं महापातकनाशनम् । पुण्यं दिनमथासाद्य तुलापुरुषदानवत् । ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम् । कुर्य्यादुपोषितस्तद्वल्लोकेशावाहनं बुधः । पुण्याहवाचनं कृत्वा तद्वत् कृत्वाधिवासनम्” । अत्र देशकालवृद्धिश्राद्धशिवादिपूजाब्राह्मणवाचनगुरुऋत्विग्वरणमधुपर्कदानकुण्डमण्डपवेदिसम्भारहोमाधिवासनादि-सर्वं हिरण्यगर्भादिपञ्चदशमहादानप्रकृतिभूतं मत्स्यपुराणोक्ततुलापुरुषदानविहितं वेदितव्यम् । “ब्राह्मणैरानयेत् कुण्डं तपनीयमयं शुभम् । द्वासप्तत्यङ्गुलोच्छ्रायं हेमपङ्कजगर्भवत् । त्रिभागहीनविस्तारं प्रशस्तं मुरजाकृति” । कुण्डमिति, हिरण्यगर्भाख्यं पात्रं, तपनीयमयं, स्वर्णमयं हेमपङ्कजम् तदेव नाभिशब्दवाच्यं, त्रिभागहीनविस्तारमिति, अष्टाचत्वारिंशदङ्गुलविस्तारमित्यर्थः । मुरजाकृति, मृदङ्गाकृति । आज्यक्षीरातिपूरितमिति कश्चित्पाठः । तत्र इतक्षीरे तुल्यपरिमाणे, यद्यपि चातिपूरितमित्युच्यते तथापि यजमानप्रवेशेन यथा तन्न वहिरुच्छलति तथा पूरणीयम् । “दशास्त्राणि सरत्नानि दात्रं सूचीं तथैव च । हेमनालं सपिटकं बहिरादित्यसंयुतम् । तथैवावरणं नाभेरुपवीतञ्च काञ्चनम् । पार्श्वतः स्थापयेत् तद्वद्धेमदण्डं कमण्डलुम्” । दशास्त्राणि, दशखड्गानि, अस्त्राणीति कश्चित्पाठः । तानि काञ्चनानि अस्त्राकारतया, अस्त्राणीति । अस्त्रं खनित्रमिति केचित्, रत्नानि पञ्च प्रसिद्धानि, सपिटकं, सङ्कूपान्वितं वहिरिति । हेमकुण्डाद् बाह्यप्रदेशे पार्श्वतः स्थापयेदित्यनेन सम्बन्धः । वह्निभास्करसंयुतमिति च पाठान्तरम् “वह्निभास्करयोर्लक्षणं ब्रह्माण्डदाने वक्ष्यते । वह्निमाप्यपसंयुतमिति वा पाठ तदा आप्यपः वरुणः” । तल्लक्षणमपि तत्रैव, नाभेरावरणमिति, नाभ्यावरणार्थं सौवर्णं वस्त्रं दात्रादीन्यपि सुवर्णमयान्येव कार्य्याणि । “पद्माकारं विधानं स्यात् समन्तादङ्गुलाधिकम् । मुक्तावलीसमोपेतं पद्मरागदलान्वितम् । तिलद्रोणोपरिगतं वेदीमध्ये ततोऽर्चयेत्” । द्रोणः परिभाषायां व्याख्यातः । इह खलु हिरण्यगर्भनिर्माणसुवर्णपरिमाणस्यानाम्नानात् यावता यजमानस्य प्रवेशावारणौपयिकं कुण्डं भवति तावता घटनीयं, तच्च वेदिकामध्ये लिखितचक्रस्योपरि तिलद्रोणं निधाय तदुपरि संस्थाप्य पूजयेत् । अथ तुलापुरुषदानतदधिवासनदिनादन्यद्युर्ब्राह्मणवाचनं विधाय पूर्णाहुतिप्रभृतिकर्मशेषसमाप्तिं कुर्य्यात् । ततश्च कुण्डसमीपवर्त्तिकलशजलैः पूर्ववदभिषेकः, तदुच्यते । “ततो मङ्गलशब्देन ब्रह्मवाचरवेण च । सर्वौषध्योदकस्नानं स्नापितो वेदपुङ्गवैः” । सर्वौषध्यः, व्याख्याताः, “शुक्लमाल्याम्बरधरः सर्वाभरणभूषितः । इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः । नमो हिरण्यगर्भाय हिरण्यकवचाय च । सप्तलोकसुराध्यक्ष ! जगद्धात्रे नमो नमः । भूर्लोकप्रमुखा लोकास्तव गर्भे व्यवस्थिताः । ब्रह्मादयस्तथा देवा नमस्ते विश्वधारिणे । नमस्ते भुवनाधार ! नमस्ते भुवनाश्रय ! । नमो हिरण्यगर्भाय गर्भे यस्य पितामहः । यतस्त्वमेव भूतात्मा भूते भूते व्यवस्थितः । तस्मात् मामुद्धराशेषदुःखसंसारसागरात् । एवमामन्त्र्य तन्मध्यमाविश्यास्त उदङ्मुखः । मुष्टिभ्यां परिसंगृह्य धर्मराजचतुर्मुखौ । जानुमध्ये शिरः कृत्वा तिष्ठेदुच्छ्वासपञ्चकम्” । धर्मराजोऽत्र सुवर्णमयः, तल्लक्षणञ्च तुलापुरुषेऽभिहितं चतुर्मुखोऽपि सौवर्णः, तल्लक्षणं ब्रह्माण्डदाने वक्ष्यते । तत्र दक्षिणमुष्टौ धर्मराजः, वाममुष्टौ चतुर्मुख इति । “गर्भाधानं पुंसवनं सीमन्तोन्नयनं तथा । कुर्य्युर्हिरण्यगर्भस्य ततस्ते द्विजपुङ्गवाः” । अनवलोकनमप्यत्र विज्ञेयं, एतेषु, गर्भादानादिषु वक्ष्यमाणेषु जातकर्मादिषु, मन्त्रयुक्तमनुध्यानमात्रमाचरणीयम् “गीतमङ्गलघोषेण गुरुं सन्तोषयेत् ततः । जातकर्मादिकाः कुर्य्यात् क्रियाः षोडश चापराः” । ताश्चाभिधीयन्ते । जातकर्म१ नामकरणं२ निष्क्रमणं३ अन्नप्राशनं४ चूडाकर्म५ उपनयनं६ प्राजापत्यम्७ ऐन्द्रं

आग्नेयं८ सौम्यं१०इति,चत्वारि४ वेदव्रतानि गोदानं१५ वैवाह्यः१६श्चेति द्वादश,पूर्वोक्तचतुष्टयं, मयेषु षोडशत्वम्। "कूर्च्चादिकञ्च गुरवे दत्त्वा मन्त्रमिमं जपेत्। नमो हिरण्यगर्भाय विश्वगर्भाय ते नमः। चराचरस्य जगतो गृहभूताय वै नमः। मन्त्रोऽयं अनितः पूर्वं मत्त्यं धर्मा-द्विजोत्तमः। तद्गर्भसम्भवादेव दिव्यदेहो भवाम्यहम्। चतुर्भिः कलशैर्भूयस्ततस्तं द्विजपुङ्गवाः। स्नानं कुर्युः प्रसन्नाश्च सर्वाभरणभूषिताः"। कलशैः कुण्डसमीपस्थितैरेव, स्नानं कुर्युर्यजमानस्येति शेषः "देवस्यत्वेति मन्त्रेण स्थितस्य कनकासने। अद्य जातस्य तेऽङ्गानि अभिषेक्ष्यामहे वयम्। दिव्येनानेन वपुषा चिरञ्जीव सुखीभव। ततो हिरण्यगर्भं तं तेभ्यो दद्याद्विचक्षणः"।

**हिरण्यनाभ** पु० हिरण्यं नाभौ यस्य बहुव्री०। मैनाकपर्वते हेमच०।

**हिरण्मय** हिरण्यस्य विकारः तदात्मकं वा मयट् वेदे निपातनात् मलोपः। १हिरण्यात्मके २स्वर्णविकारे च "हिरण्ययेन सविता रथेना" यजु० ३३अ० सूर्यमन्त्रः "अथ य एष हिरण्मयः पुरुषो दृश्यते" छान्दो० उ०।

**हिरण्यरेतस्** पु० हिरण्यं रेतो यस्य। १वह्नौ २चित्रकवृक्षे च अमरः। अग्निरेतसशब्दे दृश्यम्। ३सूर्ये मेदि० ४अर्कवृक्षे ५शिवे जटा०।

वह्नेस्तन्नामकारणं यथा "यत्पीतं वीतिहोत्रेण वीर्यं त्यक्तं पिनाकिना। तेनाक्रान्तोऽभवत् ब्रह्मन्! मन्दतेजा हुताशनः"। 'हुताशनोऽपि च भयाद् यत्र तत्र परिभ्रमन्। पञ्च वर्षसहस्राणि क्षुब्धात्त हव्यभुक् ततः। मांसमस्थीनि रक्तानि मेदोमज्जत्वचस्तथा। रोमाणि चाचिकेशाद्याः सर्वे जाता हिरण्मयाः। हिरण्यरेता लोकेऽस्मिन् विख्यातः पावकस्ततः" वामनपु० ५४अ०।

**हिरण्यवर्णा** स्त्री हिरण्यस्येव वर्णो यस्याः। १नदीभेदे हेमच० २हेमतुल्यवर्णयुते त्रि० "हिरण्यवर्णां हरिणीम्" श्रीसू०

**हिरण्यवाह(हु)** हिरण्यं वाहयति प्रापयति भक्तान् हिरण्यवर्णौ बाहू इव वा यस्य। १महादेवे २शोणनदभेदे च अमरः।

**हिरण्याक्ष** पु० कश्यपस्य पुत्रे दैत्यभेदे। हिरण्यकशिपुशब्दे दृश्यम्। स च वराहरूपेण विष्णुना हतः। "हतो हिरण्यकशिपुः हरिणा सिंहरूपिणा। हिरण्याक्षो धरोद्धारे बिभ्रता शौकरं वपुः" भाग० ७।३अ०।

**हिरण्याश्व** पु० हिरण्यनिर्मितोऽश्वः। तुलादिषोडशमहादानमध्ये दानार्थं स्वर्णादिना १कल्पितेऽश्वे २तद्दाने च। "अथातः संप्रवक्ष्यामि हिरण्याश्वविधिं परम्। यस्य प्रसादाद्भुवनमनन्तफलमश्नुते। पुण्यां तिथिमथासाद्य कृत्वा ब्राह्मणवाचनम्। लोकेशावाहनं कुर्य्यात् तुलापुरुषदानवत्। ऋत्विग्मण्डपसम्भारभूषणाच्छादनादिकम्। स्वल्पेष्वेकाग्निवत् कुर्य्याद्धेमवाजिनमध्ये बुधः" अत्रादिशब्देन देशकालवृद्धिश्राद्धशिवादिपूजागुरुऋत्विग्वरणमधुपर्कदानवेदिकोपरिचक्रलेखनवितानतोरणपताकाधिवासनादि मत्स्यपुराणोक्ततुलापुरुषदानविहितं संगृह्यते, स्वल्पेष्वेकाग्निवदिति, व्याख्यातं, "स्थापयेद्वेदिमध्ये तु कृष्णाजिनतिलोपरि" कृष्णाजिननिहितद्रोणपरिमिततिलोपरीति विज्ञेयम्। "कौशेयवस्त्रसंवीतं कारयेद्धेमवाजिनम्। शक्तितस्त्रिपलादूर्द्ध्वमासहस्रपलाद् बुधः। पादुकोपानहच्छत्रचामरासनभाजनैः। पूर्णकुम्भाष्टकोपेतं माल्येक्षुफलसंयुतम्। शय्यां सोपस्करान्तद्वद्धेममार्त्तण्डसंयुतम्"। शय्योपस्करा विविधास्तरणोपधानवस्त्रफलपुष्पकुङ्कुमकर्पूरागुरुचन्दनताम्बूलदर्पणकज्जलिकाचामरव्यजनासनपतद्ग्रहस्थितपात्रासितद्विकोपानद्युगलताम्रघटिकादिजलपात्रदीपिकावितानादयः। मार्त्तण्डसंयुतामिति,शय्योपरि सूर्यं सौवर्णमपि कुर्यादित्यर्थः। सूर्यलक्षणमुक्तं ब्रह्माण्डदाने "ततः सर्वौषधिस्नानस्नापितो वेदपुङ्गवैः। इममुच्चारयेन्मन्त्रं गृहीतकुसुमाञ्जलिः"। इहापि पूर्वेद्युरधिवासनं विधाय द्वितीयदिवसे पूर्ववत् पुण्याहवाचनादिपूर्णाहुतिपर्य्यन्तं कर्म, गुरुः समापयेत्। अथ सर्वौषधिजलस्नातः शुक्लाम्बरो यजमानस्त्रिःप्रदक्षिणीकृत्य वक्ष्यमाणमन्त्रमुदीरयेत्। "नमस्ते सर्वदेवेश! वेदाहरणलम्पट!। वाजिरूपेण मामस्मात् पाहि संसारसागरात्। त्वमेव सप्तधा भूत्वा छन्दोरूपेण भास्करम्। यस्मात् भासयसे लोकानतः पाहि सनातन!। एवमुच्चार्य्य गुरवे तमश्वं विनिवेदयेत्। दत्त्वा पापक्षयाद्भानोर्लोकमभ्येति शाश्वतम्। गोभिर्विभवतः सर्वानृत्विजश्चाभिपूजयेत्। सर्वधान्योपकरणं गुरवे विनिवेदयेत्। सर्वं शय्यादिकं दत्त्वा भुञ्जीतातैलमेव हि। पुराणश्रवणं तद्वत् कारयेद्भोजनानादतु"। दानवाक्यञ्च पूर्ववदुहनीयम्, अनुक्तदक्षिणेषु सुवर्णं दक्षिणेति, यथाशक्ति सुवर्णदक्षिणा, विभवतः स्वविभवानुसारेण सर्वान् सदस्यादीनृत्विजश्च गोभिः पूजयेत्, सर्वधान्योपकरणमिति विनियोगात्

